श्रुत्वान घोषं द्विपदोत्तमस्य
निर्वाणशब्दं अतिक्षिप्रमेतत्॥ ८१॥
आश्वासयित्वा च नरेन्द्रराजा
ता[1]: प्राणकोट्यो बहवो अचिन्तिया[2]:।
मा भायथा[3] भिक्षव निर्वृते मयि
भविष्यथ[4] बुद्ध ममोत्तरेण[5]॥ ८२॥
श्रीगर्भ एषो विदु बोधिसत्त्वो
गतिं गतो ज्ञानि अनास्रवस्मिन्।
स्पृशिष्यते उत्तममग्रबोधिं
विमलाग्रनेत्रो ति जिनो भविष्यति॥ ८३॥
तामेव रात्रिं तद यामि मध्यमे
परिनिर्वृतो हेतुक्षये व दीपः।
शरीर वैस्तारिकु तस्य चाभूत्
स्तूपान कोटीनयुता अनन्तका॥ ८४॥
N 21 W 25 भिक्षु[6]श्च तत्रा तथ भिक्षुणीयो
ये प्रस्थिता उत्तममग्रबोधिम्।
अनल्पकास्ते यथ गङ्गवालिका
अभियुक्त तस्यो[7] सुगतस्य शासने॥ ८५॥
यश्चापि भिक्षुस्तद धर्मभाणको
वरप्रभो येन स धर्म धारितः।
अशीति सो अन्तरकल्प पूर्णां
तहि शासने भाषति अग्रधर्मान्॥ ८६॥
अष्टाशतं तस्य अभूषि शिष्याः
परिपाचिता ये तद तेन सर्वे।
K 27 दृष्टा च तेभिर्बहुबुद्धकोट्यः
सत्कारु तेषां च कृतो महर्षिणाम्॥ ८७॥
चर्यां चरित्वा तद आनुलोमिकीं
बुद्धा अभूवन् बहुलोकधातुषु।
परस्परं ते च अनन्तरेण
अन्योन्य व्याकर्षु तदाग्रबोधये॥ ८८॥

१ K याः. २ K अचिन्तियाम्. ३ K भायथ. ४ W भविष्यते. ५ K ममान्तरेण.
६ K भिक्षू बहू तथपि च भिक्षुणीयो. ७ K तस्य.

तेषां च बुद्धान परंपरेण
दीपंकरः पश्चिमको अभूषि ।
देवातिदेवो ऋषिसंघपूजितो
विनीतवान् प्राणिसहस्रकोट्यः ॥ ८९ ॥
यश्चासि तस्यो[1] सुगतात्मजस्य
वरप्रभस्यो[2] तद् धर्म भाषतः ।
शिष्यः कुसीदश्च स लोलुपात्मा
लाभं च ज्ञानं च गवेषमाणः ॥ ९० ॥
यशोर्थिकश्चाप्यतिमात्र आसीत्
कुलाकुलं च प्रतिपन्नमासीत्[3] ।
उद्देश स्वाध्यायु तथास्य सर्वो W 26
न तिष्ठते भाषितु तस्मि काले ॥ ९१ ॥
नामं च तस्यो इममेवमासीद्
यशकामनाम्ना दिशतासु विश्रुतः ।
स चापि तेनाकुशलेन कर्मणा
कल्माषभूतेनभिसंस्कृतेन ॥ ९२ ॥
आरागयी बुद्धसहस्रकोट्यः
पूजां च तेषां विपुलामकार्षीत् ।
चीर्णा च चर्या वर आनुलोमिकी
दृष्टश्च बुद्धो अयु शाक्यसिंहः ॥ ९३ ॥
अयं च सो पश्चिमको भविष्यति
अनुत्तरां लप्स्यति चाग्रबोधिम् ।
मैत्रेयगोत्रो भगवान् भविष्यति
विनेष्यति प्राणसहस्रकोट्यः ॥ ९४ ॥
कौसीद्यप्राप्तस्तद् यो बभूव K 28
परिनिर्वृतस्य सुगतस्य शासने ।
त्वमेव सो तादृशको बभूव
अहं च आसीत्तद् धर्मभाणकः ॥ ९५ ॥
इमेन हं कारणहेतुनाद्य
दृष्ट्वा निमित्तं इदमेवरूपम् ।
ज्ञानस्य तस्य प्रथितं निमित्तं
प्रथमं मया तत्र वदामि दृष्टम् ॥ ९६ ॥

---

१ K तस्य. २ K °प्रभस्य. ३ W प्रतिपन्न आसीत्.

ध्रुवं जिनेन्द्रोऽपि समन्तचक्षुः
शाक्याधिराजः परमार्थदर्शी ।
तमेव यं इच्छति भाषणाय
पर्यायमग्रं तद्[1]द्यो मया श्रुतः ॥ ९७ ॥

तदेव परिपूर्ण निमित्तमद्य
K 27 उपायकौशल्य विनायकानाम् ।
संस्थापनं कुर्वति शाक्यसिंहो
भाषिष्यते धर्मस्वभावमुद्राम् ॥ ९८ ॥

प्रयता सुचित्ता भवथा कृताञ्जली
भाषिष्यते लोकहितानुकम्पी ।
वर्षिष्यते धर्ममनन्तवर्षं
तर्पिष्यते ये स्थित बोधिहेतोः ॥ ९९ ॥

येषां च संदेहगतीह काचिद्
ये संशया या विचिकित्स काचित् ।
व्यपनेष्यते ता विदुरात्मजानां
ये बोधिसत्त्वा इह बोधिप्रस्थितोः[2] ॥ १०० ॥

इत्यार्यसद्धर्मपुण्डरीके धमपर्याये निदानपरिवर्तो नाम प्रथमः ॥ १ ॥

---

१ K तदघो मया श्रुतम्. W २ °प्रस्थितं.

## २ उपायकौशल्यपरिवर्तः ।

अथ खलु भगवान् स्मृतिमान् संप्रजानंस्ततः[1] समाधेर्व्युत्थितः । व्युत्थाय आयुष्मन्तं N 23 K 29 W 28 शारिपुत्रमामन्त्रयते स्म—गम्भीरं शारिपुत्र दुर्दशं दुरनुबोधं बुद्धज्ञानं तथागतैरर्हद्भिः सम्यक्संबुद्धैः प्रतिबुद्धम्, दुर्विज्ञेयं सर्वश्रावकप्रत्येकबुद्धैः । तत्कस्य हेतोः ? बहुबुद्धकोटीनयुतशतसहस्रपर्युपासिताविनो हि शारिपुत्र तथागता अर्हन्तः सम्यक्संबुद्धा बहुबुद्धकोटीनयुतशतसहस्रचीर्णचरिताविनोऽनुत्तरायां सम्यक्संबोधौ दूरानुगताः कृतवीर्या आश्चर्याद्भुतधर्मसमन्वागता दुर्विज्ञेयधर्मसमन्वागता दुर्विज्ञेयधर्मानुज्ञाताविनः ॥

दुर्विज्ञेयं शारिपुत्र संधाभाष्यं तथागतानामर्हतां सम्यक्संबुद्धानाम् । तत्कस्य हेतोः ? स्वप्रत्ययान् धर्मान् प्रकाशयन्ति विविधोपायकौशल्यज्ञानदर्शनहेतुकारणनिर्देशनारम्बणनिरुक्तिप्रज्ञप्तिभिस्तैरुपायकौशल्यैस्तस्मिंस्तस्मिंल्लग्नान् सत्त्वान् प्रमोचयितुम् । महोपायकौशल्यज्ञानदर्शनपरमपारमिताप्राप्ताः शारिपुत्र तथागता अर्हन्तः सम्यक्संबुद्धाः । असङ्गाप्रतिहतज्ञानदर्शनबलवैशारद्यावेणिकेन्द्रियबलबोध्यङ्गध्यानविमोक्षसमाधिसमापत्त्यद्भुतधर्मसमन्वागता विविधधर्मसंप्रकाशकाः । महाश्चर्याद्भुतप्राप्ताः शारिपुत्र तथागता अर्हन्तः सम्यक्संबुद्धाः । अलं शारिपुत्र एतावदेव भाषितुं[2] भवतु—परमाश्चर्यप्राप्ताः शारिपुत्र तथागता अर्हन्तः K 30 सम्यक्संबुद्धाः । तथागत एव शारिपुत्र तथागतस्य धर्मान्[3] देशयेत्, यान् धर्मांस्तथागतो W 29 जानाति । सर्वधर्मानपि शारिपुत्र तथागत एव देशयति । सर्वधर्मानपि तथागत एव जानाति, ये च ते धर्माः, यथा च ते धर्माः, यादृशाश्च ते धर्माः, यल्लक्षणाश्च ते धर्माः, यत्स्वभावाश्च ते धर्माः, ये च यथा च यादृशाश्च यल्लक्षणाश्च यत्स्वभावाश्च ते धर्मा इति । तेषु धर्मेषु तथागत एव प्रत्यक्षोऽपरोक्षः ॥

अथ खलु भगवानेतमेवार्थं भूयस्या मात्रया संदर्शयमानस्तस्यां वेलायामिमा गाथा अभाषत—

अप्रमेया महावीरा लोके समरुमानुषे । N 24
न शक्यं सर्वशो ज्ञातुं सर्वसत्त्वैर्विनायकाः ॥ १ ॥
बला विमोक्षा[4] ये तेषां वैशारद्याश्च यादृशाः ।
यादृशा बुद्धधर्माश्च न शक्यं ज्ञातु केनचित् ॥ २ ॥
पूर्वे निषेविता चर्या बुद्धकोटीन अन्तिके ।
गम्भीरा चैव सूक्ष्मा च दुर्विज्ञेया सुदुर्दृशा ॥ ३ ॥
तस्यां चीर्णाय चर्यायां कल्पकोट्यो अचिन्तिया ।
फलं मे बोधिमण्डस्मिन् दृष्टं यादृशकं हि तत् ॥ ४ ॥
अहं च तत्प्रजानामि ये चान्ये लोकनायकाः । K 31
यथा यद् यादृशं चापि लक्षणं चास्य यादृशम् ॥ ५ ॥

---

१ K संप्रज्ञानः for संप्रजानन्. २ K भाषितम्. ३ K धर्म. ४ K विमोक्षाश्च.

न तद्दर्शयितुं शक्यं व्याहारोऽस्य न विद्यते ।
नाप्यसौ तादृशः कश्चित् सत्त्वो लोकस्मि विद्यते ॥ ६ ॥

यस्य तं दे[1]शयेद्धर्मं देशितं चापि जानियात् ।
अन्यत्र बोधिसत्त्वेभ्यो अधिमुक्तीय ये स्थिताः ॥ ७ ॥

ये चापि ते लोकविदुस्य श्रावकाः
कृताधिकाराः सुगतानुवर्णिताः ।
W 30 क्षीणास्रवा अन्तिमदेहधारिणो
न तेष विषयोऽस्ति जिनान ज्ञाने ॥ ८ ॥

स चैव सर्वा इय लोकधातु
पूर्णा भवेच्छारिसुतोपमानाम् ।
N 25 एकीभवित्वा[2]न विचिन्तयेयुः
सुगतस्य ज्ञानं न हि शक्य जानितुम् ॥ ९ ॥

सचेह त्वं सादृशकेहि पण्डितैः
पूर्णा भवेयुर्दशा पि दिशायो ।
ये चापि मह्यं इमि श्रावकान्ये
तेषां पि पूर्णा भवि एवमेव ॥ १० ॥

एकीभवित्वान च तेऽद्य सर्वे
विचिन्तयेयुः सुगतस्य ज्ञानम् ।
न शक्त सर्वे सहिता पि ज्ञातुं
यथा[3]प्रमेयं मम बुद्धज्ञानम् ॥ ११ ॥

K 32 प्रत्येकबुद्धान अनास्रवाणां
तीक्ष्णेन्द्रियाणान्तिमदेहधारिणाम् ।
दिशो द[4]शः सर्व भवेयुः पूर्णा
यथा नडानां वनवेणुनां वा ॥ १२ ॥

एको भवित्वान विचिन्तयेयु-
र्ममाग्रधर्माण प्रदेशमात्रम् ।
कल्पान कोटीनयुताननन्ता-
न्न तस्य भूतं परिजानि अर्थम् ॥ १३ ॥

नवयानसंप्रस्थित बोधिसत्त्वाः
कृताधिकारा बहुबुद्धकोटिषु ।

१ K दर्शयेत्. २ K °भवित्वामु. ३ K यथाप्रमेयं. ४ K दश.

सुविनिश्चितार्था बहुधर्मभाणका- W 31
स्तेषां पि पूर्णा दशिमा दिशो भवेत् ॥ १४ ॥

नडान वेणून वै[1] नित्यकाल-
मच्छिद्रपूर्णो भवि सर्वलोकः ।
एकीभवित्वान विचिन्तयेयु-
र्यो धर्म साक्षात् सुगतेन दृष्टः ॥ १५ ॥

अनुचिन्तयित्वा बहुकल्पकोट्यो N 26
गङ्गा यथा वालिक अप्रमेयाः ।
अनन्यचित्ताः सुखुमाय प्रज्ञया
तेषां पि चास्मिन् विषयो न विद्यते ॥ १६ ॥

अविवर्तिका ये भवि बोधिसत्त्वा
अनल्पका यथरिव गङ्गवालिकाः ।
अनन्यचित्ताश्च विचिन्तयेयु-
स्तेषां पि चास्मिन् विषयो न विद्यते ॥ १७ ॥

गम्भीर धर्मा सुखु[2]मा पि बुद्धा
अतर्किकाः सर्वि अनास्रवाश्च ।
अहं च जानामिह यादृशा हि ते
ते[3] वा जिना लोकि दशद्दिशासु ॥ १८ ॥

यं शारि[4]पुत्रो सुगतः प्रभाषते
अधिमुक्तिसंपन्न भवाहि तत्र ।
अनन्यथावादि जिनो महर्षी
चिरेण पी भाषति उत्तमा[5]र्थम् ॥ १९ ॥

आमन्त्रयामी इमि सर्वश्रावकान् K 33 W 32
प्रत्येकबोधाय च येऽभिप्रस्थिताः ।
संस्थापिता ये मय[6] निर्वृतीय
संमोक्षिता दुःखपरंपरातः ॥ २० ॥

उपायकौशल्य ममेतदग्रं
भाषामि धर्मं बहु येन लोके ।
तहिं तहिं लग्न प्रमोचयामि
त्रीणी च यानान्युपदर्शयामि ॥ २१ ॥

---

१ K च. २ K सुखमा. ३ K ये. ४ K शारिपुत्र. ५ K औत्तमार्थम्. ६ K मम.

अथ खलु ये[१] तत्र पर्षत्संनिपाते महाश्रावका आज्ञातकौण्डिन्यप्रमुखा अर्हन्तः N 27 क्षीणास्रवा द्वादश वशीभूतशतानि ये चान्ये श्रावकयानिका भिक्षुभिक्षुण्युपासकोपासिका ये च प्रत्येकबुद्धयानसंप्रस्थिताः, तेषां सर्वेषामेतदभवत्—को नु हेतुः किं कारणं यद् भगवानधिमात्रमुपायकौशल्यं तथागतानां संवर्णयति ? गम्भीरश्चायं मया धर्मोऽभिसंबुद्ध इति संवर्णयति ? दुर्विज्ञेयश्च सर्वश्रावकप्रत्येकबुद्धैरिति संवर्णयति ? यथा तावद् भगवता एकैव विमुक्तिराख्याता, वयमपि बुद्धधर्माणां लाभिनो निर्वाणप्राप्ताः। अस्य च वयं भगवतो भाषितस्यार्थं न जानीमः ॥

अथ खल्वायुष्मान् शारिपुत्रस्तासां चतसृणां पर्षदां विचिकित्साकथंकथां विदित्वा चेतसैव चेतःपरिवितर्कमाज्ञाय आत्मना च धर्मसंशयप्राप्तस्तस्यां वेलायां भगवन्तमेत- K 34 दवोचत्—को भगवन् हेतुः, कः प्रत्ययो यद् भगवानधिमात्रं पुनः पुनस्तथागतानामुपायकौशल्यज्ञानदर्शनधर्मदेशनां संवर्णयति—गम्भीरश्च मे धर्मोऽभिसंबुद्ध इति । दुर्विज्ञेयं च संधाभाष्यमिति पुनः पुनः संवर्णयति । न च मे भगवतोऽन्तिकादेवंरूपो धर्मपर्यायः श्रुतपूर्वः। इमाश्च भगवंश्चतस्रः पर्षदो विचिकित्साकथंकथाप्राप्ताः। तत्साधु भगवान्निर्दिशतु W 33 यत्संधाय तथागतो गम्भीरस्य तथागतधर्मस्य पुनः पुनः संवर्णनां करोति ॥

अथ खल्वायुष्मान् शारिपुत्रस्तस्यां वेलायामिमा गाथा अभाषत—

चिरस्याद्य नरादित्य ईदृशीं कुरुते कथाम् ।
बला विमोक्षा ध्यानाश्च अप्रमेया मि स्पर्शिताः ॥ २२ ॥
बोधिमण्डं च कीर्तेसि पृच्छकस्ते न विद्यते ।
संधाभाष्यं च कीर्तेसि न च त्वां कश्चि पृच्छति ॥ २३ ॥
अपृच्छितो व्याहरसि चर्यां वर्णेसि चात्मनः ।
ज्ञानाधिगम कीर्तेसि गम्भीरं च प्रभाषसे ॥ २४ ॥
अद्येमे संशयप्राप्ता वशीभूता अनास्रवाः ।
निर्वाणं प्रस्थिता ये च किमेतद् भाषते जिनः ॥ २५ ॥
K 35 प्रत्येकबोधिं प्रार्थेन्तो[२] भिक्षुण्यो भिक्षवस्तथा ।
देवा नागाश्च यक्षाश्च गन्धर्वाश्च महोरगाः ॥ २६ ॥
समालपन्तो अन्योन्यं प्रेक्षन्ते द्विपदोत्तमम् ।
कथंकथी विचिन्तेन्ता व्याकुरुष्व महामुने ॥ २७ ॥
N 28 यावन्तः श्रावकाः सन्ति सुगतस्येह सर्वशः ।
अहमत्र पारमीप्राप्तो निर्दिष्टः परमर्षिणा ॥ २८ ॥
ममापि संशयो ह्यत्र स्वके स्थाने नरोत्तम ।
किं निष्ठा मम निर्वाणे अथ चर्या मि दर्शिता ॥ २९ ॥

१ K ते. २ K प्रार्थेन्ति.

प्रमुञ्च घोषं वरदुन्दुभिस्वरा
उदाहरस्वा यथ एष धर्मः ।
इमे स्थिता पुत्र जिनस्य औरसा
व्यवलोकयन्तश्च कृताञ्जली जिनम् ॥ ३० ॥
देवाश्च नागाश्च सयक्षराक्षसाः
कोटीसहस्रा यथ गङ्गवालिकाः ।
ये चापि प्रार्थेन्ति समग्रबोधिं
सहस्रशीतिः परिपूर्ण ये स्थिताः ॥ ३१ ॥ W 34
राजान ये महिपति चक्रवर्तिनो
ये आगताः क्षेत्रसहस्रकोटिभिः ।
कृताञ्जली सर्वि सगौरवाः स्थिताः
कथं नु चर्यां परिपूरयेम ॥ ३२ ॥

एवमुक्ते भगवानायुष्मन्तं शारिपुत्रमेतदवोचत्—अलं शारिपुत्र । किमनेनार्थेन K 36
भाषितेन ? तत्कस्य हेतोः ? उत्रसिष्यति शारिपुत्र अयं सदेवको लोकोऽस्मिन्नर्थे व्याक्रियमाणे । द्वैतीयकमप्यायुष्मान् शारिपुत्रो भगवन्तमध्ये[1]षते स्म—भाषतां भगवान्, भाषतां सुगत एतमेवार्थम् । तत्कस्य हेतोः ? सन्ति भगवंस्तस्यां पर्षदि बहूनि प्राणिशतानि बहूनि प्राणिसहस्राणि बहूनि प्राणिशतसहस्राणि बहूनि प्राणिकोटीनयुतशतसहस्राणि पूर्वबुद्धदर्शावीनि प्रज्ञावन्ति, यानि भगवतो भाषितं श्रद्धास्यन्ति प्रतीयिष्यन्ति उद्ग्रहीष्यन्ति ॥

अथ खल्वायुष्मान् शारिपुत्रो भगवन्तमनया गाथयाध्य[2]भाषत—

विस्पष्टु भाषस्व जिना[3]न उत्तमा
सन्तीह पर्षाय सहस्र प्राणिनाम् ।
श्राद्धाः[4] प्रसन्नाः सुगते सगौरवा
ज्ञास्यन्ति ये धर्ममुदाहृतं ते ॥ ३३ ॥

अथ खलु भगवान् द्वैतीयकमप्यायुष्मन्तं शारिपुत्रमेतदवोचत्—अलं शारिपुत्र K 37
अनेनार्थेन प्रकाशितेन । उत्रसिष्यति शारिपुत्र अयं सदेवको लोकोऽस्मिन्नर्थे व्याक्रियमाणे । अभिमानप्राप्ताश्च भिक्षवो महाप्रपातं प्रपतिष्यन्ति ॥

अथ खलु भगवांस्तस्यां वेलायामिमां गाथामभाषत— N 29

अलं हि धर्मेणिह भाषितेन W 35
सूक्ष्मं इदं ज्ञानमतर्किकं च ।
अभिमानप्राप्ता बहु सन्ति बाला
निर्दिष्टधर्मस्मि क्षिपे अजानकाः ॥ ३४ ॥

---

१ K अध्येष्यते.　२ W अप्यभाषत.　३ W जनान.　४ W श्रद्धाः.

त्रैतीयकमप्यायुष्मान् शारिपुत्रो भगवन्तमध्येषते स्म—भाषतां भगवान्, भाषतां सुगत एतमेवार्थम् । मादृशानां भगवन्निह पर्षदि बहूनि प्राणिशतानि संविद्यन्ते, अन्यानि च भगवन् बहूनि प्राणिशतानि बहूनि प्राणिसहस्राणि बहूनि प्राणिशतसहस्राणि बहूनि प्राणिकोटीनयुतशतसहस्राणि, यानि भगवता पूर्वभवेषु परिपाचितानि, तानि भगवतो भाषितं श्रद्धास्यन्ति प्रतीयिष्यन्ति उद्ग्रहीष्यन्ति । तेषां तद्भविष्यति दीर्घरात्रमर्थाय हिताय सुखायेति ॥

K 38 अथ खल्वायुष्मान् शारिपुत्रस्तस्यां वेलायामिमा गाथा अभाषत—

भाषस्व धर्मं द्विपदानमुत्तमा
अहं त्वामध्येषमि ज्येष्ठपुत्रः ।
सन्तीह प्राणीन सहस्रकोट्यो
ये श्रद्दधास्यन्ति ते धर्म भाषितम् ॥ ३५ ॥
ये च त्वया पूर्वभवेषु नित्यं
परिपाचिताः सत्त्व सुदीर्घरात्रम् ।
कृताञ्जली ते पि स्थितात्र सर्वे
ये श्रद्दधास्यन्ति तवैत धर्मम् ॥ ३६ ॥
अस्मादृशा द्वादशिमे शताश्च
ये चापि ते प्रस्थित अग्रबोधये ।
तान् पश्यमानः सुगतः प्रभाषतां
तेषां च हर्षं परमं जनेतु ॥ ३७ ॥

W 36 अथ खलु भगवांस्त्रैतीयकमप्यायुष्मतः शारिपुत्रस्याध्येषणां विदित्वा आयुष्मन्तं शारिपुत्रमेतदवोचत्—यदिदानीं त्वं शारिपुत्र यावत्त्रैतीयकमपि तथागतमध्येषसे । एवमध्येषमाणं त्वां शारिपुत्र किं वक्ष्यामि ? तेन हि शारिपुत्र शृणु, साधु च सुष्ठु च मनसि कुरु । भाषिष्येऽहं ते ॥

समनन्तरभाषिता चेयं भगवता वाक्, अथ खलु ततः पर्षद आभिमानिकानां भिक्षूणां भिक्षुणीनामुपासकानामुपासिकानां पञ्चमात्राणि सहस्राण्युत्थाय आसनेभ्यो भगवतः पादौ शिरसाभिवन्दित्वा ततः पर्षदोऽपक्रामन्ति स्म, यथापीदमभिमानाकुशलमूलेन
K 39 अप्राप्ते प्राप्तसंज्ञिनोऽनधिगतेऽधिगतसंज्ञिनः । ते आत्मानं सव्रणं ज्ञात्वा ततः पर्षदोऽपक्रान्ताः । भगवांश्च तूष्णींभावेनाधिवासयति स्म ॥

अथ खलु भगवानायुष्मन्तं शारिपुत्रमामन्त्रयते स्म—निष्पलावा मे शारिपुत्र पर्षत्
N 30 अपगतफल्गुः श्रद्धासारे प्रतिष्ठिता । साधु शारिपुत्र एतेषामाभिमानिकानामतोऽपक्रमणम् । तेन हि शारिपुत्र भाषिष्ये एतमर्थम् । साधु भगवन्नित्यायुष्मान् शारिपुत्रो भगवतः प्रत्यश्रौषीत् ॥

भगवानेतदवोचत्—कदाचित् कर्हिचिच्छारिपुत्र तथागत एवंरूपां धर्मदेशनां कथयति । तद्यथापि नाम शारिपुत्र उदुम्बरपुष्पं कदाचित् कर्हिचित् संदृश्यते, एवमेव शारिपुत्र तथागतोऽपि कदाचित् कर्हिचित् एवंरूपां धर्मदेशनां कथयति । श्रद्दधत मे शारिपुत्र, भूतवाद्यहमस्मि, तथावाद्यहमस्मि, अनन्यथावाद्यहमस्मि । दुर्बोध्यं शारिपुत्र तथागतस्य संधाभाष्यम् । तत्कस्य हेतोः ? नानानिरुक्तिनिर्देशाभिलापनिर्देशनैर्मया शारिपुत्र विविधैरुपायकौशल्यशतसहस्रैर्धर्मः संप्रकाशितः । अतर्कोऽतर्कावचरस्तथागतविज्ञेयः शारिपुत्र सद्धर्मः । W 37 तत्कस्य हेतोः ? एककृत्येन शारिपुत्र एककरणीयेन तथागतोऽर्हन् सम्यक्संबुद्धो लोक उत्पद्यते महाकृत्येन महाकरणीयेन । K 40 कतमं च शारिपुत्र तथागतस्य एककृत्यमेककरणीयं महाकृत्यं महाकरणीयं येन कृत्येन तथागतोऽर्हन् सम्यक्संबुद्धो लोक उत्पद्यते ? यदिदं तथागतज्ञानदर्शनसमादापनहेतुनिमित्तं सत्त्वानां तथागतोऽर्हन् सम्यक्संबुद्धो लोक उत्पद्यते । तथागतज्ञानदर्शनसंदर्शनहेतुनिमित्तं सत्त्वानां तथागतोऽर्हन् सम्यक्संबुद्धो लोक उत्पद्यते । तथागतज्ञानदर्शनावतारणहेतुनिमित्तं सत्त्वानां तथागतोऽर्हन् सम्यक्संबुद्धो लोक उत्पद्यते । तथागतज्ञानप्रतिबोधनहेतुनिमित्तं सत्त्वानां तथागतोऽर्हन् सम्यक्संबुद्धो लोक उत्पद्यते । तथागतज्ञानदर्शनमार्गावतारणहेतुनिमित्तं सत्त्वानां तथागतोऽर्हन् सम्यक्संबुद्धो लोक उत्पद्यते । इदं तच्छारिपुत्र तथागतस्य एककृत्यमेककरणीयं महाकृत्यं महाकरणीयमेकप्रयोजनं लोके प्रादुर्भावाय । इति हि शारिपुत्र यत्तथागतस्य एककृत्यमेककरणीयं महाकृत्यं महाकरणीयम्, तत्तथागतः करोति । तत्कस्य हेतोः ? तथागतज्ञानदर्शनसमादापक एवाहं शारिपुत्र, तथागतज्ञानदर्शनसंदर्शक एवाहं शारिपुत्र, तथागतज्ञानदर्शनावतारक एवाहं शारिपुत्र, तथागतज्ञानदर्शनप्रतिबोधक एवाहं शारिपुत्र, तथागतज्ञानदर्शनमार्गावतारक एवाहं शारिपुत्र । एकमेवाहं शारिपुत्र यानमारभ्य सत्त्वानां धर्मं देशयामि यदिदं बुद्धयानम् । न किंचिच्छारिपुत्र द्वितीयं वा तृतीयं वा यानं संविद्यते । सर्वत्रैषा शारिपुत्र धर्मता दशदिग्लोके । तत्कस्य हेतोः ? येऽपि तु शारिपुत्र अतीतेऽध्वन्यभूवन् दशसु दिक्ष्वप्रमेयेष्वसंख्येयेषु लोकधातुषु तथागता अर्हन्तः सम्यक्संबुद्धा बहुजनहिताय बहुजनसुखाय लोकानुकम्पायै N 31 महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च । K 41 ये नानाभिनिर्हारनिर्देशविविधहेतुकारणनिदर्शनारम्बणनिरुक्त्युपायकौशल्यैर्नानाधिमुक्तानां सत्त्वानां नानाधात्वाशयानामाशयं विदित्वा धर्मं देशितवन्तः । W 38 तेऽपि सर्वे शारिपुत्र बुद्धा भगवन्त एकमेव यानमारभ्य सत्त्वानां धर्मं देशितवन्तः, यदिदं बुद्धयानं सर्वज्ञतापर्यवसानम्, यदिदं तथागतज्ञानदर्शनसमादापनमेव सत्त्वानां तथागतज्ञानदर्शनसंदर्शनमेव तथागतज्ञानदर्शनावतारणमेव तथागतज्ञानदर्शनप्रतिबोधनमेव तथागतज्ञानदर्शनमार्गावतारणमेव सत्त्वानां धर्मं देशितवन्तः । यैरपि शारिपुत्र सत्त्वैस्तेषामतीतानां तथागतानामर्हतां सम्यक्संबुद्धानामन्तिकात् सद्धर्मः श्रुतः, तेऽपि सर्वेऽनुत्तरायाः सम्यक्संबोधेर्लाभिनोऽभूवन् ॥

येऽपि ते शारिपुत्र अनागतेऽध्वनि भविष्यन्ति दशसु दिक्ष्वप्रमेयेष्वसंख्येयेषु लोकधातुषु तथागता अर्हन्तः सम्यक्संबुद्धा बहुजनहिताय बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च, ये च नानाभिर्निर्हारनिर्देशविविधहेतुकारणनिदर्शनारम्बणनिरुक्त्युपायकौशल्यैर्नानाधिमुक्तानां सत्त्वानां नानाधात्वाशयानामाशयं विदित्वा धर्मं देशयिष्यन्ति, तेऽपि सर्वे शारिपुत्र बुद्धा भगवन्त एकमेव यानमारभ्य सत्त्वानां धर्मं देशयिष्यन्ति यदिदं बुद्धयानं सर्वज्ञतापर्यवसानम्, यदिदं तथागतज्ञानदर्शनसमादापनमेव सत्त्वानां तथागतज्ञानदर्शनसंदर्शनमेव तथागतज्ञानदर्शनावतारणमेव तथागतज्ञानदर्शनप्रतिबोधनमेव तथागतज्ञानदर्शनमार्गावतारणमेव सत्त्वानां धर्मं देशयिष्यन्ति। येऽपि ते शारिपुत्र सत्त्वास्तेषामनागतानां तथागतानामर्हतां सम्यक्संबुद्धानामन्तिकात् तं धर्मं श्रोष्यन्ति, तेऽपि सर्वेऽनुत्तरायाः सम्यक्संबोधेर्लाभिनो भविष्यन्ति॥

K 42 येऽपि ते शारिपुत्र एतर्हि प्रत्युत्पन्नेऽध्वनि दशसु दिक्ष्वप्रमेयेष्वसंख्येयेषु लोकधातुषु
तथागता अर्हन्तः सम्यक्संबुद्धास्तिष्ठन्ति ध्रियन्ते यापयन्ति, धर्मं च देशयन्ति बहुजनहिताय
W 39 बहुजनहिताय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां
N 32 च, ये नानाभिनिर्हारनिर्देशविविधहेतुकारणनिदर्शनारम्बणनिरुक्त्युपायकौशल्यैर्नानाधिमुक्तानां सत्त्वानां नानाधात्वाशयानामाशयं विदित्वा धर्मं देशयन्ति, तेऽपि सर्वे शारिपुत्र बुद्धा भगवन्त एकमेव यानमारभ्य सत्त्वानां धर्मं देशयन्ति यदिदं बुद्धयानं सर्वज्ञतापर्यवसानम्, यदिदं तथागतज्ञानदर्शनसमादापनमेव सत्त्वानां तथागतज्ञानदर्शनसंदर्शनमेव तथागतज्ञानदर्शनावतारणमेव तथागतज्ञानदर्शनप्रतिबोधनमेव तथागतज्ञानदर्शनमार्गावतारणमेव सत्त्वानां धर्मं देशयन्ति। येऽपि ते[1] शारिपुत्र सत्त्वास्तेषां प्रत्युत्पन्नानां तथागतानामर्हतां सम्यक्संबुद्धानामन्तिकात् तं धर्मं शृण्वन्ति, तेऽपि सर्वेऽनुत्तरायाः सम्यक्संबोधेर्लाभिनो भविष्यन्ति॥

अहमपि शारिपुत्र एतर्हि तथागतोऽर्हन् सम्यक्संबुद्धो बहुजनहिताय बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च नानाभिनिर्हारनिर्देशविविधहेतुकारणनिदर्शनारम्बणनिरुक्त्युपायकौशल्यैर्नानाधिमुक्तानां सत्त्वानां नानाधात्वाशयानामाशयं विदित्वा धर्मं देशयामि। अहमपि शारिपुत्र एकमेव यानमारभ्य सत्त्वानां धर्मं देशयामि यदिदं बुद्धयानं सर्वज्ञतापर्यवसानम्, यदिदं तथागतज्ञानदर्शनसमादापनमेव सत्त्वानां तथागतज्ञानदर्शनसंदर्शनमेव तथागतज्ञानदर्शनावतारणमेव तथागतज्ञानदर्शनप्रतिबोधनमेव तथागतज्ञानदर्शनमार्गावतारणमेव सत्त्वानां धर्मं देशयामि। येऽपि
K 43 ते शारिपुत्र सत्त्वा एतर्हि ममेमं धर्मं शृण्वन्ति, तेऽपि सर्वेऽनुत्तरायाः सम्यक्संबोधेर्लाभिनो भविष्यन्ति। तदनेनापि शारिपुत्र पर्यायेण एवं वेदितव्यं यथा नास्ति द्वितीयस्य यानस्य क्वचिद्दशसु दिक्षु लोके प्रज्ञप्तिः, कुतः पुनस्तृतीयस्य॥

अपि तु खलु पुनः शारिपुत्र यदा तथागता अर्हन्तः सम्यक्संबुद्धा कल्पकषाये

---

१ K. om. ते.

वोत्पद्यन्ते सत्त्वकषाये वा क्लेशकषाये वा दृष्टिकषाये वा आयुष्कषाये वोत्पद्यन्ते । एवंरूपेषु W 40
शारिपुत्र कल्पसंक्षोभकषायेषु बहुसत्त्वेषु लुब्धेष्वल्पकुशलमूलेषु तदा शारिपुत्र तथागता
अर्हन्तः सम्यक्संबुद्धा उपायकौशल्येन तदेवैकं बुद्धयानं त्रियाननिर्देशेन निर्दिशन्ति ।
तत्र शारिपुत्र ये श्रावका अर्हन्तः प्रत्येकबुद्धा वा इमां क्रियां तथागतस्य बुद्धयानसमादपनां
न शृण्वन्ति नावतरन्ति नावबुध्यन्ति, न ते शारिपुत्र तथागतस्य श्रावका वेदितव्याः,
नाप्यर्हन्तो नापि प्रत्येकबुद्धा वेदितव्याः । अपि तु खलु पुनः शारिपुत्र यः कश्चिद् N 33
भिक्षुर्वा भिक्षुणी वा अर्हत्त्वं प्रतिजानीयात्, अनुत्तरायां सम्यक्संबोधौ प्रणिधानमपरिगृह्य
उच्छिन्नोऽस्मि बुद्धयानादिति वदेत्, एतावन्मे समुच्छ्रयस्य पश्चिमकं परिनिर्वाणं वदेत्,
आभिमानिकं तं शारिपुत्र प्रजानीयाः । तत्कस्य हेतोः ? अस्थानमेतच्छारिपुत्र अनवकाशो
यद्भिक्षुरर्हन् क्षीणास्रवः संमुखीभूते तथागते इमं धर्मं श्रुत्वा न श्रद्दध्यात् स्थापयित्वा
परिनिर्वृतस्य तथागतस्य । तत्कस्य हेतोः ? न हि शारिपुत्र श्रावकास्तस्मिन् काले तस्मिन्
समये परिनिर्वृते तथागते एतेषामेवंरूपाणां सूत्रान्तानां धारका वा देशका वा[1] भविष्यन्ति । K 44
अन्येषु पुनः शारिपुत्र तथागतेष्वर्हत्सु सम्यक्संबुद्धेषु निःसंशया भविष्यन्ति । इमेषु बुद्ध-
धर्मेषु श्रद्दधाध्वं मे शारिपुत्र पत्तीयत अवकल्पयत । न हि शारिपुत्र तथागतानां मृषावादः
संविद्यते । एकमेवेदं शारिपुत्र यानं यदिदं बुद्धयानम् ॥

अथ खलु भगवानेतमेवार्थं भूयस्या मात्रया संदर्शयमानस्तस्यां वेलायामिमा गाथा अभाषत—

अथाभिमानप्राप्ता ये भिक्षुभिक्षुण्युपासकाः ।
उपासिकाश्च अश्राद्धाः सहस्राः पञ्चनूनकाः ॥ ३८ ॥
अपश्यन्त[2] इमं दोषं छिद्रशिक्षासमन्विताः । W 41
व्रणांश्च परिरक्षन्तः प्रक्रान्ता बालबुद्धयः ॥ ३९ ॥
पर्षत्कषायितां[3] ज्ञात्वा लोकनाथोऽधिवासयि[4] ।
तत्तेषां कुशलं नास्ति शृणुयुर्धर्म ये इमम् ॥ ४० ॥
शुद्धा च निष्पलावा च सुस्थिता परिषन्मम ।
फल्गुव्यपगता सर्वा सारा चेयं प्रतिष्ठिता ॥ ४१ ॥
शृणोहि मे शारिसुता यथैष K 45
संबुद्ध धर्मः पुरुषोत्तमेहि ।
यथा च बुद्धाः कथयन्ति नायका
उपायकौशल्यशतैरनेकैः ॥ ४२ ॥
यथाशयं जानिय ते चरिं च N 34
नानाधिमुक्तानिह प्राणकोटिनाम् ।

१ K om. वा. २ K संपश्यन्त. ३ K पर्षत्कषट्टतां. ४ K °नाथोसि ध्वंनि तान्(?).

चित्राणि कर्माणि विदित्व तेषां
पुराकृतं यत्कुशलं च तेहि ॥ ४३ ॥
नानानिरुक्तीहि च कारणेहि
संप्रापयामी इम तेष प्राणिनाम् ।
हेतूहि दृष्टान्तशतेहि चाहं
तथा तथा तोषयि सर्वसत्त्वान् ॥ ४४ ॥
सूत्राणि भाषामि तथैव गाथा
इतिवृत्तकं जातकमद्भुतं च ।
निदान औपम्यशतैश्च चित्रै-
W 42 गेयं च भाषामि तथोपदेशान् ॥ ४५ ॥
ये भोन्ति हीनाभिरता अविद्वसू
अचीर्णचर्या बहुबुद्धकोटिषु ।
संसारलग्नाश्च सुदुःखिताश्च
निर्वाण तेषामुपदर्शयामि ॥ ४६ ॥
उपायमेतं कुरुते स्वयंभू-
र्बौद्धस्य ज्ञानस्य प्रबोधनार्थम् ।
न चापि तेषां प्रवदे कदाचिद्
युष्मेऽपि बुद्धा इह लोकि भेष्यथ ॥ ४७ ॥
किं कारणं कालमवेक्ष्य तायी
क्षणं च दृष्ट्वा तत[1]ु पश्च भाषते ।
सोऽयं क्षणो अद्य कथंचि लब्धो
वदामि येनेह च भूतनिश्चयम् ॥ ४८ ॥
K 46 नवाङ्गमेतन्मम शासनं च
प्रकाशितं सत्त्वबलाबलेन ।
उपाय एषो वरदस्य ज्ञाने
प्रवेशनार्थाय निदर्शितो मे ॥ ४९ ॥
भवन्ति ये[2] चेह सदा विशुद्धा
व्यक्ता शुची सूरत बुद्धपुत्राः ।
कृताधिकारा बहुबुद्धकोटिषु
वैपुल्यसूत्राणि वदामि तेषाम् ॥ ५० ॥

१ K न तु. २ K मे.

तथा हि ते आशयसंपदाय
विशुद्धरूपाय समन्विताभूंन्[1] ।
वदामि तान् बुद्ध भविष्यथेति
अनागतेऽध्वानि हितानुकम्पकाः ॥ ५१ ॥
श्रुत्वा च प्रीतिस्फुट भोन्ति सर्वे W 43
बुद्धा भविष्याम जगत्प्रधानाः ।
पुनश्च हं जानिय तेष चर्यां
वैपुल्यसूत्राणि प्रकाशयामि ॥ ५२ ॥
इमे च ते श्रावक नायकस्य
येहि श्रुतं शासनमेतमग्र्यम् ।
एकापि गाथा श्रुत धारिता वा
सर्वेष बोधार्य[2] न संशयोऽस्ति ॥ ५३ ॥
एकं हि यानं द्वितियं न विद्यते
तृतियं हि नैवास्ति कदाचि लोके ।
अन्यत्रुपाया पुरुषोत्तमानां
यद्याननानात्वुपदर्शयन्ति ॥ ५४ ॥
बौद्धस्य ज्ञानस्य प्रकाशनार्थं
लोके समुत्पद्यति लोकनाथः ।
एकं हि कार्यं द्वितियं न विद्यते
न हीनयानेन नयन्ति बुद्धाः ॥ ५५ ॥
प्रतिष्ठितो यत्र स्वयं स्वयंभू- N 35
र्यच्चैव बुद्धं यथ यादृशं च । K 47
बला[3]श्च ये ध्यानविमोक्ष-इन्द्रिया-
स्तत्रैव सत्त्वा पि प्रतिष्ठपेति ॥ ५६ ॥
मात्सर्यदोषो हि भवेत मह्यं
स्पृशित्व बोधिं विरजां विशिष्टाम् ।
यदि हीनयानस्मि प्रतिष्ठपेय-
मेकं पि सत्त्वं न ममेतु साधु ॥ ५७ ॥
मात्सर्य मह्यं न कहिंचि विद्यते
ईर्ष्या न मे नापि च छन्दरागः ।

---

१ K °भूत. २ K बोधीय. ३ W बला च.

W 44 उच्छिन्न पापा मम सर्वधर्मा-
स्तेनास्मि बुद्धो जगतो[1]ऽनुबोधात् ॥ ५८ ॥
यथा ह्यहं चित्रितु लक्षणेहि
प्रभासयन्तो इमु सर्वलोकम् ।
पुरस्कृतः प्राणिशतैरनेकै-
र्देशेमिमां धर्मस्वभावमुद्राम् ॥ ५९ ॥
एवं च चिन्तेम्यहु शारिपुत्र
कथं नु एवं भवि सर्वसत्त्वाः ।
द्वात्रिंशतीलक्षणरूपधारिणः
स्वयंप्रभा लोकविदू स्वयंभूः ॥ ६० ॥
यथा च पश्यामि यथा च चिन्तये
यथा च संकल्प ममासि पूर्वम् ।
परिपूर्णमेतत् प्रणिधानु[2] मह्यं
बुद्धा च बोधिं च[3] प्रकाशयामि ॥ ६१ ॥
सचेदहं शारिसुता वदेयं
सत्त्वान बोधाय जनेथ छन्दम् ।
अजानकाः सर्व भ्रमेयुरत्र
न जातु गृह्णीयु सुभाषितं मे ॥ ६२ ॥
K 48 तांश्चैव हं जानिय एवरूपान्
न चीर्णचर्याः पुरिमासु जातिषु ।
अध्योषिताः कामगुणेषु सक्ता-
स्तृष्णाय संमूर्छित मोहचित्ताः ॥ ६३ ॥
ते कामहेतोः प्रपतन्ति दुर्गतिं
षट्सू गतीषू परिखिद्यमानाः ।
कटसी च वर्धेन्ति पुनः पुनस्ते
दुःखेन संपीडित अल्पपुण्याः ॥ ६४ ॥
विलग्न दृष्टीगहनेषु नित्य-
W 45 मस्तीति नास्तीति तथास्ति नास्ति ।
द्वाषष्टि दृष्टीकृत निश्रयित्वा[4]
असन्त भावं परिगृह्य ते स्थिताः ॥ ६५ ॥

---

१ K जगतानुबोधात्. २ K प्रणिधान. ३ W नो. ४ K N निश्चयित्वा.

दुःशोधका मानिन[1] दम्भिनश्च
वङ्काः शठा अल्पश्रुताश्च बालाः ।
ते नैव शृण्वन्ति सुबुद्धघोषं
कदाचि पि जातिसहस्रकोटिषु ॥ ६६ ॥

तेषामहं शारिसुता उपायं
वदामि दुःखस्य करोथ अन्तम् ।
दुःखेन संपीडित दृष्ट्व सत्त्वान्
निर्वाण तत्राप्युपदर्शयामि ॥ ६७ ॥

एवं च भाषाम्यहु नित्यनिर्वृता
आदिप्रशान्ता इमि सर्वधर्माः ।
चर्यां च सो[2] पूरिय बुद्धपुत्रो
अनागतेऽध्वानि जिनो भविष्यति ॥ ६८ ॥

उपायकौशल्य ममैवरूपं N 36
यत् त्रीणि यानान्युपदर्शयामि ।
एकं तु यानं हि नयश्च एक
एका चियं देशन नायकानाम् ॥ ६९ ॥

व्यपनेहि काङ्क्षां तथ संशयं च K 49
येषां च केषां चिह काङ्क्ष विद्यते ।
अनन्यथावादिन लोकनायका
एकं इदं यानु[3] द्वितीयु नास्ति ॥ ७० ॥

ये चाप्यभूवन् पुरिमास्तथागताः W 46
परिनिर्वृता बुद्धसहस्र नेके ।
अतीतमध्वानमसंख्यकल्पे
तेषां प्रमाणं न कदाचि विद्यते ॥ ७१ ॥

सर्वेहि तेहि पुरुषोत्तमेहि
प्रकाशिता धर्म बहू विशुद्धाः ।
दृष्टान्तकैः कारणहेतुभिश्च
उपायकौशल्यशतैरनेकैः ॥ ७२ ॥

सर्वे च ते दर्शयि एकयान-
मेकं च यानं अवतारयन्ति ।

---

१ K मानि च. २ K यो. ३ K यान द्वितीय.

एकस्मि याने परिपाचयन्ति
अचिन्तिया प्राणिसहस्रकोट्यः ॥ ७३ ॥

अन्ये उपाया विविधा जिनानां
येही प्रकाशेन्तिममग्रधर्मम्।
ज्ञात्वाधिमुक्तिं तथ आशयं च
तथा[1]गता लोकि सदेवकस्मिन् ॥ ७४ ॥

ये चापि सत्त्वास्तहि तेष संमुखं
शृण्वन्ति धर्मं अथ वा श्रुताविनः।
दानं च दत्तं चरितं च शीलं
क्षान्त्या च संपादित सर्वचर्याः ॥ ७५ ॥

वीर्ये[2]ण ध्यानेन कृताधिकाराः
प्रज्ञाय वा चिन्तित एति धर्माः।
विविधानि पुण्यानि कृतानि येहि
ते सर्वि बोधा[3]य अभूषि लाभिनः ॥ ७६ ॥

K 50 W 47 परिनिर्वृतानां च जिनान तेषां
ये शासने केचिदभूषि सत्त्वाः।
क्षान्ता च दान्ता च विनीत तत्र
ते सर्वि बोधा[3]य अभूषि लाभिनः ॥ ७७ ॥

ये चापि धातून करोन्ति पूजां
जिनान तेषां परिनिर्वृतानाम्।
रत्नामयान् स्तूपसहस्र नेकान्
सुवर्णरूप्यस्य च स्फाटिकस्य ॥ ७८ ॥

ये चाश्मगर्भस्य करोन्ति स्तूपान्
कर्केतनामुक्तमयांश्च केचित्।
वैडूर्यश्रेष्ठस्य तथेन्द्रनीला[4]न्
ते सर्वि बोधा[3]य अभूषि लाभिनः ॥ ७९ ॥

ये चापि शैलेषु करोन्ति स्तूपान्
ये चन्दनानामगुरुस्य केचित्।
ये देवदारुस्य करोन्ति स्तूपान्
ये दारुसंघातमयांश्च केचित् ॥ ८० ॥

१ K तथागतो. २ K वीर्ये च ध्याने च. ३ K बोधीय. ४ K °नीले.

इष्टामयान् मृत्तिकसंचितान् वा
  प्रीताश्च कुर्वन्ति जिनान स्तूपान् ।
उद्दिश्य ये पांसुकराशयोऽपि
  अटवीषु दुर्गेषु च कारयन्ति ॥ ८१ ॥
सिकतामयान् वा पुन कूट कृत्वा
  ये केचिदुद्दिश्य जिनान स्तूपान् ।
कुमारकाः क्रीडिषु तत्र तत्र
  ते सर्वि बोधाय[1] अभूषि लाभिनः ॥ ८२ ॥
रत्नामया[2] बिम्ब तथैव केचिद् N 38 W 48
  द्वात्रिंशतीलक्षणरूपधारिणः ।
उद्दिश्य कारापित येहि चापि
  ते सर्वि बोधाय[1] अभूषि लाभिनः ॥ ८३ ॥
ये सप्तरत्नामय तत्र केचिद्
  ये ताम्रिका वा तथ कांसिका वा ।
कारापयीषु सुगतान बिम्बा
  ते सर्वि बोधाय[1] अभूषि लाभिनः ॥ ८४ ॥
सीसस्य लोहस्य च मृत्तिकाय वा K 51
  कारापयीषु सुगतान विग्रहान् ।
ये पुस्तकर्मामय दर्शनीयां-
  स्ते सर्वि बोधाय[1] अभूषि लाभिनः ॥ ८५ ॥
ये चित्रभित्तीषु करोन्ति विग्रहान्
  परिपूर्णगात्रान् शतपुण्यलक्षणान् ।
लिखेत्स्वयं चापि लिखापयेद्वा
  ते सर्वि बोधाय[1] अभूषि लाभिनः ॥ ८६ ॥
ये चापि केचित्तहि शिक्षमाणाः
  क्रीडारतिं चापि विनोदयन्तः ।
नखेन काष्ठेन कृतांसि[3] विग्रहान्
  भित्तीषु[4] पुरुषा च कुमारका वा ॥ ८७ ॥
सर्वे च ते कारुणिका अभूवन्
  सर्वेऽपि ते तारयि प्राणिकोट्यः ।

---

१ K बोधीय. २ K रत्नामयान्. ३ W कृतावि. ४ K ते सर्वि बोधीय अभूषि लाभिनः.

समादपेन्ता बहुबोधिसत्त्वां-
W 49 स्ते[1] सर्वि बोधाय अभूषि लाभिनः ॥ ८८ ॥

धातूषु यैश्चा[2]पि तथागतानां
स्तूपेषु वा मृत्तिकविग्रहेषु वा ।
आलेख्यभित्तीष्वपि पांसुस्तूपे
पुष्पा च गन्धा च प्रदत्त आसीत् ॥ ८९ ॥

N 39 वाद्या च वादापित येहि तत्र
भेर्योऽथ शङ्खाः पटहाः सुघोषकाः ।
निर्नादिता दुन्दुभयश्च येहि
पूजाविधानाय वराग्रबोधिनाम् ॥ ९० ॥

वीणाश्च ताला पणवाश्च येहि
मृदङ्ग वंशा तुण[3]वा मनोज्ञाः ।
एकोत्सवा वा सुकुमारका वा
ते सर्वि बोधाय अभूषि लाभिनः ॥ ९१ ॥

K 52 वादापिता झल्लरियोऽपि येहि
जलमण्डका चर्पटमण्ड[4]का वा ।
सुगतान उद्दिश्यथ पूजनार्थं
गीतं सु[5]गीतं मधुरं मनोज्ञम् ॥ ९२ ॥

सर्वे च ते बुद्ध अभूषि लोके
कृत्वान तां बहुविधधातुपूजाम् ।
किमल्पकं पि सुगतान धातुषु
एकं पि वादापिय वाद्यभाण्डम् ॥ ९३ ॥

पुष्पेण चैकेन पि पूजयित्वा
आलेख्यभित्तौ सुगतान बि[6]म्बान् ।
W 50 विक्षिप्तचित्ता पि च पूजयित्वा
अनुपूर्व द्रक्ष्यन्ति च[7] बुद्धकोट्यः ॥ ९४ ॥

---

१ K reads for st. 88 ;– भित्तीषु पुरुषा च कुमारका वा
सर्वे च ते कारुणिका अभूवन् ।
सर्वेऽपि ते तारयि प्राणिकोट्यः
समादपेन्ता बहुबोधिसत्त्वान् ॥

२ K ये चापि. ३ K प्रणदा. ४ K चर्पटमण्डकाप्यथ. ५ K च गीतं for सुगीतं. ६ K बिम्बम्. ७ K पि.

यैश्चाञ्जलिस्तत्र कृतोऽपि स्तूपे
　परिपूर्ण एका तलसक्तिका वा ।
उन्नामितं शीर्षमभून्मुहूर्त-
　मव[1]नामितः कायु तथैकवारम् ॥ ९५ ॥

नमोऽस्तु बुद्धा[2]य कृतैकवारं
　येही तदा धातुधरेषु तेषु ।
विक्षिप्तचित्तैरपि एकवारं
　ते सर्वि प्राप्ता इममग्रबोधिम् ॥ ९६ ॥

सुगतान तेषां तद तस्मि काले
　परिनिर्वृतानामथ तिष्ठतां वा ।
ये धर्मनामापि श्रुणिंसु सत्त्वा-
　स्ते सर्वि बोधाय अभूषि लाभिनः ॥ ९७ ॥

अनागता पी बहुबुद्धकोट्यो N 40
　अचिन्तिया येषु प्रमाणु नास्ति ।
ते पी जिना उत्तमलोकनाथाः
　प्रकाशयिष्यन्ति उपायमेतम् ॥ ९८ ॥ W 51

उपायकौशल्यमनन्तु तेषां K 53
　भविष्यति लोकविनायकानाम् ।
येना विनेष्यन्तिह प्राणकोट्यो
　बौद्धस्मि ज्ञानस्मि अनास्रवस्मिन् ॥ ९९ ॥

एकोऽपि सत्त्वो न कदाचि तेषां
　श्रुत्वान धर्मं न भवे[3]त बुद्धः ।
प्रणिधानमेतद्धि तथागतानां
　चरित्व बोधाय चरापयेयम् ॥ १०० ॥

धर्मामुखा कोटिसहस्र नेके
　प्रकाशयिष्यन्ति अनागतेऽध्वे ।
उपदर्शयन्तो इममेकयानं
　वक्ष्यन्ति धर्मं हि तथागतत्वे ॥ १०१ ॥

स्थितिका हि एषा सद धर्मनेत्री
　प्रकृतिश्च धर्माण सदा प्रभा[सते] ।

१ K °नामितं.　२ W बुद्धान.　३ K भवेय.

विदित्व बुद्धा द्विपदानमुत्तमा
प्रकाशयिष्यन्ति ममेकयानम् ॥ १०२ ॥
धर्मस्थितिं धर्मनियामतां च
नित्यस्थितां लोकि इमामकम्प्याम् ।
बुद्धाश्च बोधिं पृथिवीय मण्डे
प्रकाशयिष्यन्ति उपायकौशलम् ॥ १०३ ॥
दशसू दिशासू नरदेवपूजिता-
स्तिष्ठन्ति बुद्धा यथ गङ्गवालिकाः ।
सुखापनार्थं इह सर्वप्राणिनां
ते चापि भाषन्तिममग्रबोधिम् ॥ १०४ ॥
N 41 उपायकौशल्य प्रकाशयन्ति
W 52 विविधानि यानान्युपदर्शयन्ति ।
एकं च यानं परिदीपयन्ति
बुद्धा इमामुत्तमशान्तभूमिम् ॥ १०५ ॥
चरितं च ते जानिय सर्वदेहिनां
यथाशयं यच्च पुरा निषेवितम् ।
वीर्यं च स्थामं च विदित्व तेषां
ज्ञात्वाधिमुक्तिं च प्रकाशयन्ति ॥ १०६ ॥
K 54 दृष्टान्तहेतून् बहु दर्शयन्ति
बहुकारणान् ज्ञानबलेन नायकाः ।
नानाधिमुक्तांश्च विदित्व सत्त्वान्
नानाभिनिर्हारुपदर्शयन्ति ॥ १०७ ॥
अहं पि चैतर्हि जिनेन्द्रनायको
उत्पन्न सत्त्वान सुखापनार्थम् ।
संदर्शयामी इम बुद्धबोधिं
नानाभिनिर्हारसहस्रकोटिभिः ॥ १०८ ॥
देशेमि धर्मं च बहुप्रकारं
अधिमुक्तिमध्याशय ज्ञात्व प्राणिनाम् ।
संहर्षयामी विविधैरुपायैः
प्रत्यात्मिकं ज्ञानबलं ममैतत् ॥ १०९ ॥
अहं पि पश्यामि दरिद्रसत्त्वान्
प्रज्ञाय पुण्येहि च विप्रहीणान् ।

प्रस्कन्न[1] संसारि निरुद्ध दुर्गे
मग्नाः पुनर्दुःखपरंपरासु ॥ ११० ॥

तृष्णाविलग्नांश्चमरीव बाले
कामैरिहान्धीकृत सर्वकालम्।
न बुद्धमेषन्ति महानुभावं
न धर्म मार्गन्ति दुखान्तगामिनम् ॥ १११ ॥

गतीषु षट्सु परिरुद्ध[2]चित्ताः N 42
कुदृष्टिदृष्टीषु स्थिता अकम्प्याः। W 53
दुःखातु[3] दुःखा[4]नुप्रधावमानाः
कारुण्य मह्यं बलवन्तु तेषु ॥ ११२ ॥

सोऽहं विदित्वा तहि बोधिमण्डे
सप्ताह त्रीणि परिपूर्ण संस्थितः।
अर्थं विचिन्तेमिममेवरूपं
उल्लोकयन् पादपमेव तत्र ॥ ११३ ॥ K 55

प्रेक्षामि तं चानिमिषं द्रुमेन्द्रं
तस्यैव हेष्ठे अनु[5]चंक्रमामि।
आश्चर्यज्ञानं च इदं विशिष्टं
सत्त्वाश्च मोहान्ध अविद्वसू इमे ॥ ११४ ॥

ब्रह्मा च मां याचति तस्मि काले
शक्रश्च चत्वारि च लोकपालाः।
महेश्वरो ईश्वर एव चापि
मरुद्गणानां च सहस्रकोटयः ॥ ११५ ॥

कृताञ्जली सर्वि स्थिताः सगौरवा
अर्थं च चिन्तेमि कथं करोमि।
अहं च बोधीय वदामि वर्णान्
इमे च दुःखैरभिभूत सत्त्वाः ॥ ११६ ॥

ते मह्य धर्मं क्षिपि बालभाषितं
क्षिपित्व गच्छेयुरपायभूमिम्।
श्रेयो ममा नैव कदाचि भाषितुं W 54
अद्यैव मे निर्वृतिरस्तु शान्ता ॥ ११७ ॥

---

१ K N प्रस्कन्द. २ W परिगृद्ध°. ३ W दुःखेन. ४ K दुःखं प्रतिवेद्मानाः.
५ K अनुचंक्रयामि.

N 43 पुरिमांश्च बुद्धान् समनुस्मरन्तो
उपायकौशल्यु यथा च तेषाम् ।
यं नून हं पि इम बुद्धबोधिं
त्रिधा वि[१]भज्येह प्रकाशयेयम् ॥ ११८ ॥

एवं च मे चिन्तितु एष धर्मो
ये चान्ये बुद्धा दशसु दिशासु ।
दर्शिंसु ते मह्य तदात्मभावं
साधुं ति घोषं समुदीरयन्ति ॥ ११९ ॥

साधू मुने लोकविनायकाग्र
अनुत्तरं ज्ञानमिहाधिगम्य ।
उपायकौशल्यु विचिन्तयन्तो
अनुशिक्षसे लोकविनायकानाम् ॥ १२० ॥

K 56 वयं पि [२]बुद्धाय परं तदा पदं
तृधा च कृत्वान प्रकाशयामः ।
हीनाधिमुक्ता हि अविद्वसू नरा
भविष्यथा बुद्ध न श्रद्दधेयुः ॥ १२१ ॥

ततो वयं कारणसंग्रहेण
उपायकौशल्य निषेवमाणाः ।
फलाभिलाषं परिकीर्तयन्तः
समादपेमो बहुबोधिसत्त्वान् ॥ १२२ ॥

अहं चुदग्रस्तद आसि श्रुत्वा
W 55 घोषं मनोज्ञं पुरुषर्षभाणाम् ।
उदग्रचित्तो भणि तेष तायिनां
न मोहवादी प्रवरा महर्षी ॥ १२३ ॥

N 44 अहं पि एवं समुदाचरिष्ये
यथा वदन्ती विदु लोकनायकाः ।
अहं पि संक्षोभि इमस्मि दारुणे
उत्पन्न सत्त्वान कषायमध्ये ॥ १२४ ॥

ततो ह्यहं शारिसुता विदित्वा
वाराणसीं प्रस्थितु तस्मि काले ।

१ K विभाज्येह. २ W बुद्धा परमं.

तहि पञ्चकानां प्रवदामि भिक्षुणां
धर्मं उपायेन प्रशान्तभूमिम् ॥ १२५ ॥

ततः प्रवृत्तं मम धर्मचक्रं
निर्वाणशब्दश्च अभूषि लोके ।
अर्हन्तशब्दस्तथ धर्मशब्दः
संघस्य शब्दश्च अभूषि तत्र ॥ १२६ ॥

भाषामि वर्षाणि अनल्पकानि
निर्वाणभूमिं चुपदर्शयामि ।
संसारदुःखस्य च एष अन्तो
एवं वदामी अहु नित्यकालम् ॥ १२७ ॥

यस्मिंश्च काले अहु शारिपुत्र K 57
पश्यामि पुत्रान् द्विपदोत्तमानाम् ।
ये प्रस्थिता उत्तममग्रबोधिं
कोटीसहस्राणि अनल्पकानि ॥ १२८ ॥

उपसंक्रमित्वा च ममैव अन्तिके
कृताञ्जलीः सर्वि स्थिताः सगौरवाः ।
येही श्रुतो धर्म जिनान आसीत्
उपायकौशल्यु बहुप्रकारम् ॥ १२९ ॥

ततो मर्मा[1] एतदभूषि तत्क्षणं W 56
समयो मर्मा[1] भाषितुमग्रधर्मम् ।
यस्याहमर्थं इह लोकि जातः
प्रकाशयामी तमिहाग्रबोधिम् ॥ १३० ॥

दुःश्रद्दधं एतु भविष्यतेऽद्य
निमित्तसंज्ञौनिह[2] बालबुद्धिनाम् ।
अधिमानप्राप्तान अविद्वसूनां
इमे तु श्रोष्यन्ति हि बोधिसत्त्वाः ॥ १३१ ॥

विशारदश्चाहु तदा प्रहृष्टः
संलीयनां सर्व विवर्जयित्वा ।
भाषामि मध्ये सुगतात्मजानां
तांश्चैव बोधाय समादपेमि ॥ १३२ ॥

---

१ K मम.   २ K °संज्ञीनिह.

N 45 संदृश्य चैतादृशबुद्धपुत्रां-
स्तवापि काङ्क्षा व्यपनीत भेष्यति।
ये चा शता द्वादशिमे अनास्रवा
बुद्धा भविष्यन्तिमि लोकि सर्वे॥ १३३॥

यथैव तेषां पुरिमाण तायिनां
अनागतानां च जिनान धर्मता।
ममापि एषैव विकल्पवर्जिता
तथैव हं देशयि अद्य तुभ्यम्॥ १३४॥

कदाचि कहिंचि कथंचि लोके
उत्पादु भोति पुरुषर्षभाणाम्।
उत्पद्य चा लोकि अनन्तचक्षुषः
कदाचिदेतादृशु धर्म देशयुः॥ १३५॥

K 58 सुदुर्लभो ईदृशु अग्रधर्मः
कल्पान कोटीनयुतैरपि स्यात्।
W 57 सुदुर्लभा ईदृशकाश्च सत्त्वाः
श्रुत्वान ये श्रद्दधि अग्रधर्मम्॥ १३६॥

औदुम्बरं पुष्प यथैव दुर्लभं
कदाचि क[1]हिंचि कथंचि दृश्यते।
मनोज्ञरूपं च जनस्य तद्भवे-
दाश्चर्यु लोकस्य सदेवकस्य॥ १३७॥

अतश्च आश्चर्यतरं वदामि
श्रुत्वान यो धर्ममिमं सुभाषितम्।
अनुमोदि एकं पि भणेय वाचं
कृत सर्वबुद्धान भवेय पूजा॥ १३८॥

व्यपनेहि काङ्क्षामिह संशयं च
आरोच[2]यामि अहु धर्मराजा।
समाद[3]पेमि अहमग्रबोधौ
न श्रावकाः केचिदिहास्ति मह्यम्॥ १३९॥

तव शारिपुत्रैतु रहस्यु भोतु
ये चापि मे श्रावक मह्य सर्वे।

---

१ W कश्चि च. २ W आरोचयापी. ३ W समादपेपी.

ये बोधिसत्त्वाश्च इमे प्रधाना
रहस्यमेतन्मम धारयन्तु ॥ १४० ॥

किं कारणं पञ्चकषायकाले
क्षुद्राश्च दुष्टाश्च भवन्ति सत्त्वाः।
कामैरिहान्धीकृत बालबुद्धयो
न तेष बोधाय कदाचि चित्तम् ॥ १४१ ॥

श्रुत्वा च यानं मम एतदेकं N 46
प्रकाशितं तेन जिनेन आसीत्।
अनागतेऽध्वानि भ्रमेयु सत्त्वाः
सूत्रं क्षिपित्वा नरकं व्रजेयुः ॥ १४२ ॥

लज्जी शुची ये च भवेयु सत्त्वाः K 59
सं[1]प्रस्थिता उत्तममग्रबोधिम्। W 58
विशारदो भूत्व वदेमि तेषा-
मेकस्य यानस्य अनन्तवर्णान् ॥ १४३ ॥

एतादृशी देशन नायकाना-
मुपायकौशल्यमिदं वरिष्ठम्।
ब[2]हूहि संधावचनेहि चोक्तं
दुर्बोध्यमेतं हि अशिक्षितेहि ॥ १४४ ॥

तस्माद्धि संधावचनं विजानिया
बुद्धान लोकाचरियाण तायिनाम्।
जहित्व काङ्क्षां विजहित्व संशयं
भविष्यथा बुद्ध जनेथ हर्षम् ॥ १४५ ॥

इत्यार्यसद्धर्मपुण्डरीके धर्मपर्याये उपायकौशल्यपरिवर्तो नाम द्वितीयः ॥

---

१ W ये प्रस्थिता. २ K बहूनि.

# ३ औपम्यपरिवर्तः ।

N 47 K 60 W 59 अथ खल्वायुष्मान् शारिपुत्रस्तस्यां वेलायां तुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातो येन भगवांस्तेनाञ्जलिं प्रणम्य भगवतोऽभिमुखो भगवन्तमेव व्यवलोकयमानो भगवन्तमेतदवोचत्—आश्चर्याद्भुतप्राप्तोऽस्मि भगवन् औद्बिल्यप्राप्तः इदमेवंरूपं भगवतोऽन्तिकाद् घोषं श्रुत्वा । तत्कस्य हेतोः ? अश्रुत्वैव तावदहं भगवन् इदमेवंरूपं भगवतोऽन्तिकाद् धर्मं तदन्यान् बोधिसत्त्वान् दृष्ट्वा बोधिसत्त्वानां च अनागतेऽध्वनि बुद्धनाम[1] श्रुत्वा अतीव शोचामि अतीव संतप्ये, भ्रष्टोऽस्म्येवंरूपात् तथागतज्ञानगोचराद् ज्ञानदर्शनात् । यदा चाहं भगवन् अभीक्ष्णं गच्छामि पर्वतगिरिकन्दराणि वनषण्डान्यारामनदीवृक्षमूलान्येकान्तानि दिवाविहाराय, तदाप्यहं भगवन् यद्भूयस्त्वेन अनेनैव विहारेण विहरामि । तुल्ये[2] नाम धर्मधातुप्रवेशे वयं भगवता हीनेन यानेन निर्यातिताः । एवं च मे भगवंस्तस्मिन् समये भवति—अस्माकमेवैषोऽपराधः, नैव भगवतोऽपराधः । तत्कस्य हेतोः ? सचेद्भगवानस्माभिः प्रतीक्षितः स्यात् सामुत्कर्षिकीं धर्मदेशनां कथयमानः, यदिदमनुत्तरां सम्यक्संबोधिमारभ्य, तेष्वेव वयं भगवन् धर्मेषु निर्याताः स्याम । यत्पुनर्भगवन् अस्माभिरनुपस्थितेषु बोधिसत्त्वेषु संधाभाष्यं भगवतोऽजानमानैस्त्वरमाणैः प्रथमभाषितैव तथागतस्य धर्मदेशना श्रुत्वोद्गृहीता धारिता भाविता चिन्तिता मनसिकृता । सोऽहं भगवन् आत्मपरि-
K 61 W 60 भाषणयैव भूयिष्ठेन रात्रिंदिवान्यतिनामयामि । अद्यास्मि भगवन् निर्वाणप्राप्तः । अद्यास्मि भगवन् परिनिर्वृतः । अद्य मे भगवन् अर्हत्त्वं प्राप्तम् । अद्याहं भगवन् भगवतः पुत्रो ज्येष्ठ औरसो मुखतो जातो धर्मजो धर्मनिर्मितो धर्मदायादो धर्मनिर्वृत्तः । अपगतपरिदाहोऽस्म्यद्य भगवन् इममेवंरूपमद्भुतधर्ममश्रुतपूर्वं भगवतोऽन्तिकाद् घोषं श्रुत्वा ॥

अथ खल्वायुष्मान् शारिपुत्रस्तस्यां वेलायां भगवन्तमाभिर्गाथाभिरध्यभाषत—

N 48 आश्चर्यप्राप्तोऽस्मि महाविनायक
औद्बिल्यजातो इमु घोष श्रुत्वा ।
कथंकथा मह्य न भूय काचित्
परिपाचितोऽहं इह अग्रयाने ॥ १ ॥

आश्चर्यभूतः सुगतान घोषः
काङ्क्षां च शोकं च जहाति प्राणिनाम् ।
क्षीणास्रव[3]स्यो मम यश्च शोको
विर्गतो[4]ऽस्ति सर्वं श्रुणियान घोषम् ॥ २ ॥

दिवाविहारमनुचंक्रमन्तो
वनषण्ड आरामथ वृक्षमूलम् ।

---

१ W बुद्धनामं. २ K तुल्यनाम. ३ K °स्रवस्य. ४ K विगतो मि.

गिरिकन्दरांश्चाप्युपसेवमानो
अनुचिन्तयामी इममेव चिन्ताम् ॥ ३ ॥
अहोऽस्मि परिवञ्चितु पापचित्तै-
स्तुल्येषु धर्मेषु अनास्रवेषु ।
यन्नाम त्रैधातुकि अग्रधर्मं
न देशयिष्यामि अनागतेऽध्वे ॥ ४ ॥
द्वात्रिंशती लक्षण मह्य भ्रष्टा K 62
सुवर्णवर्णच्छविता च भ्रष्टा ।
बला विमोक्षाश्चिमि सर्वि रिञ्चिता W 61
तुल्येषु धर्मेषु अहोऽस्मि मूढः ॥ ५ ॥
अनु[1]व्यञ्जना ये च महामुनीना-
मशीति पूर्णाः प्रवरा विशिष्टाः ।
अष्टादशावेणिक ये च धर्मा-
स्ते चापि भ्रष्टा अहु वञ्चितोऽस्मि ॥ ६ ॥
दृष्ट्वा च त्वां लोकहितानुकम्पी
दिवाविहारं परिगम्य चैकः ।
हा वञ्चितोऽस्मीति विचिन्तयामि
असङ्गज्ञानातु अचिन्तियातः ॥ ७ ॥
रात्रिंदिवानि क्षपयामि नाथ
भूयिष्ठ सो एव विचिन्तयन्तः ।
पृच्छामि तावद् भगवन्तमेव
भ्रष्टोऽहमस्मीत्यथ वा न वेति ॥ ८ ॥
एवं च मे चिन्तयतो जिनेन्द्र
गच्छन्ति रात्रिंदिव नित्यकालम् ।
दृष्ट्वा च अन्यान् बहुबोधिसत्त्वान्
संवर्णिताँल्लोकविनायकेन ॥ ९ ॥
श्रुत्वा च सोऽहं इमु बुद्धधर्मं
संधाय एतत्किल भाषितं ति ।
अतर्किकं सूक्ष्ममनास्रवं च
ज्ञानं प्रणेती जिन बोधिमण्डे ॥ १० ॥

---

१ K अनुव्यञ्जति.

दृष्टीविलग्नो ह्यहमासि पूर्वं
परिव्राजकस्तीर्थिकसंमतश्च ।
ततो ममा आशयु ज्ञात्व नाथो
दृष्टीविमोक्षाय ब्रवीति निर्वृतिम् ॥ ११ ॥
N 49 W 62 विमुच्य ता दृष्टिकृतानि सर्वशः
शून्यांश्च धर्मानहु स्पर्शयित्वा ।
ततो विजानाम्यहु निर्वृतोऽस्मि
न चापि निर्वाणमिदं [१]प्रवुच्यति ॥ १२ ॥
K 63 यदा तु बुद्धो भवतेऽग्रसत्त्वः
पुरस्कृतो नरमरुयक्षराक्षसैः ।
द्वात्रिंशतीलक्षणरूपधारी
अशेषतो निर्वृतु भोति तत्र ॥ १३ ॥
व्यपनीत सर्वाणि मि मन्यितानि
श्रुत्वा च घोषं अहमद्य निर्वृतः ।
यदापि व्याकुर्वसि अग्रबोधौ
पुरतो हि लोकस्य सदेवकस्य ॥ १४ ॥
बलवच्च आसीन्मम छम्भितत्वं
प्रथमं गिरं श्रुत्व विनायकस्य ।
मा हैव मारो स भवेद्विहेठको
अभिनिर्मिणित्वा भुवि बुद्धवेषम् ॥ १५ ॥
यदा तु हेतूहि च कारणैश्च
दृष्टान्तकोटीनयुतैश्च दर्शिता ।
सुपरिस्थिता सा वरबुद्धबोधि-
स्ततोऽस्मि निष्काङ्क्षु श्रुणित्व धर्मम् ॥ १६ ॥
यदा च मे बुद्धसहस्रकोटयः
कीर्तेष्यती तान् परिनिर्वृतान् जिनान् ।
[२]येथा च तैर्देशितु एष धर्म
उपायकौशल्य प्रतिष्ठिहित्वा ॥ १७ ॥
अनागताश्चो बहु बुद्ध लोके
तिष्ठन्ति ये चो परमार्थदर्शिनः ।

---

१ K प्रबुध्यति. २ K यदा.

उपायकौशल्यशतैश्च धर्मं W 63
निदर्शयिष्यन्त्यथ देशयन्ति च ॥ १८ ॥
तथा[1] च ते आत्मन यादृशी चरी
अभिनिष्क्रमित्वा[2] प्रभृतीय संस्तुता ।
बुद्धं च ते यादृशु धर्मचक्रं K 64
तथा च तेऽवस्थित धर्मदेशना ॥ १९ ॥

ततश्च जानामि न एष मारो
भूतां चरिं दर्शयि लोकनाथः ।
न ह्यत्र माराण गती[3] हि विद्यते
ममैव चित्तं विचिकित्सप्राप्तम् ॥ २० ॥
यदा तु मधुरेण गभीरवल्गुना
संहर्षितो बुद्धस्वरेण चाहम् ।
तदा मि विध्वंसित सर्वसंशया
विचिकित्स नष्टा च स्थितोऽस्मि ज्ञाने ॥ २१ ॥
निःसंशयं भेष्यि तथागतोऽहं
पुरस्कृतो लोकि सदेवकेऽस्मिन् ।
संधाय वक्ष्ये इमु बुद्धबोधिं
समादपेन्तो बहुबोधिसत्त्वान् ॥ २२ ॥

एवमुक्ते भगवानायुष्मन्तं शारिपुत्रमेतदवोचत्—आरोचयामि ते शारिपुत्र, प्रतिवेदयामि ते अस्य सदेवकस्य लोकस्य पुरतः समारकस्य सब्रह्मकस्य सश्रमणब्राह्मणिकायाः प्रजायाः पुरतः । मया त्वं शारिपुत्र विंशतीनां बुद्धकोटीनयुतशतसहस्राणामन्तिके परिपाचितोऽनुत्तरायां सम्यक्संबोधौ । मम च त्वं शारिपुत्र दीर्घरात्रमनुशिक्षितोऽभूत् । स त्वं शारिपुत्र बोधिसत्त्वसंमन्त्रितेन बोधिसत्त्वरहस्येन इह मम प्रवचने उपपन्नः । स त्वं शारिपुत्र बोधिसत्त्वाधिष्ठानेन तत्पौर्वकं चर्याप्रणिधानं बोधिसत्त्वसंमन्त्रितं बोधिसत्त्वरहस्यं न समनुस्मरसि । निर्वृतोऽस्मीति मन्यसे । सोऽहं त्वां शारिपुत्र पूर्वचर्याप्रणिधानज्ञानानुबोधमनुस्मारयितुकाम इमं सद्धर्मपुण्डरीकं धर्मपर्यायं सूत्रान्तं महावैपुल्यं बोधिसत्त्वाववादं सर्वबुद्धपरिग्रहं श्रावकाणां संप्रकाशयामि ॥ N 50 W 64 K 65

अपि खलु पुनः शारिपुत्र, भविष्यसि त्वमनागतेऽध्वनि अप्रमेयैः कल्पैरचिन्त्यैरप्रमाणैर्बहूनां तथागतकोटीनयुतशतसहस्राणां सद्धर्मं धारयित्वा विविधां च पूजां कृत्वा इमामेव बोधिसत्त्वचर्यां परिपूर्य पद्मप्रभो नाम तथागतोऽर्हन् सम्यक्संबुद्धो लोके भविष्यसि

१ K यदा. २ W अभिनिष्क्रमातात्. ३ K गतीह.

विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान् ॥

तेन खलु पुनः शारिपुत्र समयेन तस्य भगवतः पद्मप्रभस्य तथागतस्य विरजं नाम बुद्धक्षेत्रं भविष्यति समं रमणीयं प्रासादिकं परमसुदर्शनीयं परिशुद्धं च स्फीतं च ऋद्धं च क्षेमं च सुभिक्षं च बहुजननारीगणाकीर्णं च मरुप्रकीर्णं च वैडूर्यमयं सुवर्णसूत्राष्टापदनिबद्धम्। तेषु च अष्टापदेषु रत्नवृक्षा भविष्यन्ति सप्तानां रत्नानां पुष्पफलैः सततसमितं समर्पिताः ॥

सोऽपि शारिपुत्र पद्मप्रभस्तथागतोऽर्हन् सम्यक्संबुद्धस्त्रीण्येव यानान्यारभ्य धर्मं देशयिष्यति। किंचापि शारिपुत्र स तथागतो न कल्पकषाय उत्पत्स्यते, अपि तु प्रणिधानवशेन धर्मं देशयिष्यति। [K 66] महारत्नप्रतिमण्डितश्च नाम शारिपुत्र स कल्पो भविष्यति। तत्किं मन्यसे शारिपुत्र केन कारणेन स कल्पो महारत्नप्रतिमण्डित इत्युच्यते? रत्नानि शारिपुत्र बुद्धक्षेत्रे बोधिसत्त्वा उच्यन्ते[1]। ते तस्मिन् काले तस्यां विरजायां लोकधातौ बहवो बोधिसत्त्वा भविष्यन्त्यप्रमेया असंख्येया अचिन्त्या अतुल्या अमाप्या गणनां समतिक्रान्ता अन्यत्र तथागतगणनया। तेन कारणेन स कल्पो महारत्नप्रतिमण्डित इत्युच्यते ॥

[W 65] [N 51] तेन खलु पुनः शारिपुत्र समयेन बोधिसत्त्वास्तस्मिन् बुद्धक्षेत्रे यद्भूयसा रत्नपद्मविक्रामिणो भविष्यन्ति। अनादिकर्मिकाश्च ते बोधिसत्त्वा भविष्यन्ति। चिरचरितकुशलमूला बहुबुद्धशतसहस्रचीर्णब्रह्मचर्याः, तथागतपरिसंस्तुता बुद्धज्ञानाभियुक्ता महाभिज्ञापरिकर्मनिर्जाताः सर्वधर्मनयकुशला मार्दवाः स्मृतिमन्तः। भूयिष्ठेन शारिपुत्र एवंरूपाणां बोधिसत्त्वानां परिपूर्णं तद्बुद्धक्षेत्रं भविष्यति ॥

तस्य खलु पुनः शारिपुत्र पद्मप्रभस्य तथागतस्य द्वादशान्तरकल्पा आयुष्प्रमाणं [K 67] भविष्यति स्थापयित्वा कुमारभूतत्वम्। तेषां च सत्त्वानामष्टान्तरकल्पा आयुष्प्रमाणं भविष्यति। स च शारिपुत्र पद्मप्रभस्तथागतो द्वादशानामन्तरकल्पानामत्ययेन धृतिपरिपूर्णं नाम बोधिसत्त्वं महासत्त्वं व्याकृत्य अनुत्तरायां सम्यक्संबोधौ परिनिर्वास्यति। अयं भिक्षवो धृतिपरिपूर्णो बोधिसत्त्वो महासत्त्वो ममानन्तरमनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यते। पद्मवृषभविक्रामी नाम तथागतोऽर्हन् सम्यक्संबुद्धो लोके भविष्यति विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान्। तस्यापि शारिपुत्र पद्मवृषभविक्रामिणस्तथागतस्य एवंरूपमेव बुद्धक्षेत्रं भविष्यति ॥

तस्य खलु पुनः शारिपुत्र पद्मप्रभस्य तथागतस्य परिनिर्वृतस्य द्वात्रिंशदन्तरकल्पान् सद्धर्मः स्थास्यति। ततस्तस्य तस्मिन् सद्धर्मे क्षीणे द्वात्रिंशदन्तरकल्पान् सद्धर्मप्रतिरूपकः स्थास्यति ॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत—

भविष्यसे शारिसुता तुहं पि
अनागतेऽध्वानि जिनस्तथागतः।

---

१ W उच्यते.

पद्मप्रभो नाम समन्तचक्षु- W 66
विनेष्यसे प्राणिसहस्रकोट्यः ॥ २३ ॥
बहुबुद्धकोटीषु करित्व सत्क्रियां
चर्याबलं तत्र उपार्जयित्वा ।
उत्पादयित्वा च दशो बलानि
स्पृशिष्यसे उत्तममग्रबोधिम् ॥ २४ ॥
अचिन्तिये अपरिमितस्मि कल्पे K 68
प्रभूतरत्नस्तद कल्पु भेष्यति ।
विरजा च नाम्ना तद लोकधातुः
क्षेत्रं विशुद्धं द्विपदोत्तमस्य ॥ २५ ॥
वैडूर्यसंस्तीर्ण तथैव भूमिः
सुवर्णसूत्रप्रतिमण्डिता च ।
रत्नामयैर्वृक्षशतैरुपेता
सुदर्शनीयैः फलपुष्पमण्डितैः ॥ २६ ॥
स्मृतिमन्त तस्मिन् बहुबोधिसत्त्वाः N 52
चर्याभिनिर्हारसुकोविदाश्च ।
ये शिक्षिता बुद्धशतेषु चर्यां
ते तत्र क्षेत्रे उपपद्य सन्ति ॥ २७ ॥
सो चेज्जिनः पश्चिमके समुच्छ्रये
कुमारभूमीमतिनामयित्वा ।
जहित्व कामानभिनिष्क्रमित्वा
स्पृशिष्यते उत्तममग्रबोधिम् ॥ २८ ॥
सम द्वादशा अन्तरकल्प तस्य
भविष्यते आयु तदा जिनस्य ।
मनुजा[1]नपी अन्तरकल्प अष्ट
आयुष्प्रमाणं तहि तेष भेष्यति ॥ २९ ॥
परिनिर्वृतस्यापि जिनस्य तस्य
द्वात्रिंशतिं अन्तरकल्प पूर्णाम् । W 67
सद्धर्म संस्थास्यति तस्मि काले
हिताय लोकस्य सदेवकस्य ॥ ३० ॥

---

१ K मनुजानमभ्यन्तरकल्प.

K 69 सद्धर्मि क्षीणे प्रतिरूपकोऽस्य
द्वात्रिंशती अन्तरकल्प स्थास्यति ।
शरीरवैस्तारिक तस्य तायिनः
सुसत्कृतो नरमरुतैश्च नित्यम् ॥ ३१ ॥

एतादृशः सो भगवान् भविष्यति
प्रहृष्ट त्वं शारिसुता भवस्व ।
त्वमेव सो तादृशको भविष्यसि
अनाभिभूतो द्विपदानमुत्तमः ॥ ३२ ॥

अथ खलु ताश्चतस्रः पर्षदो भिक्षुभिक्षुण्युपासकोपासिका देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगमनुष्यामनुष्या आयुष्मतः शारिपुत्रस्येदं व्याकरणमनुत्तरायां सम्यक्संबोधौ भगवतोऽन्तिकात् संमुखं श्रुत्वा तुष्टा उदग्रा आत्तमनसः प्रमुदिताः प्रीतिसौमनस्यजाताः स्वकस्वकैश्चीवरैर्भगवन्तमभिच्छादयामासुः । शक्रश्च देवानामिन्द्रो ब्रह्मा च सहांपतिरन्याश्च देवपुत्रशतसहस्रकोट्यो भगवन्तं दिव्यैर्वस्त्रैरभिच्छादयामासुः । दिव्यैश्च मान्दारवैर्महामान्दारवैश्च पुष्पैरभ्यवकिरन्ति स्म । दिव्यानि च वस्त्राण्युपर्यन्तरीक्षे भ्रामयन्ति स्म । दिव्यानि च तूर्यशतसहस्राणि दुन्दुभयश्चोपर्यन्तरीक्षे पराहनन्ति स्म । महान्तं च पुष्पवर्षमभिप्रवर्षयित्वा एवं च वाचं भाषन्ते स्म—पूर्वं भगवता वाराणस्यामृषिपतने मृगदावे धर्मचक्रं प्रवर्तितम् । इदं पुनर्भगवता अद्य अनुत्तरं द्वितीयं धर्मचक्रं प्रवर्तितम् । ते च देवपुत्रास्तस्यां वेलायामिमा गाथा अभाषन्त—

धर्मचक्रं प्रवर्तेसि लोके अप्रतिपुद्गल ।
वाराणस्यां महावीर स्कन्धानामुदयं व्ययम् ॥ ३३ ॥
K 70 W 68 प्रथमं प्रवर्तितं तत्र द्वितीयमिह नायक ।
दुःश्रद्दधेय यस्तेषां देशितोऽद्य विनायक ॥ ३४ ॥
N 53 बहु धर्मः श्रुतोऽस्माभिर्लोकनाथस्य संमुखम् ।
न चायमीदृशो धर्मः श्रुतपूर्वः कदाचन ॥ ३५ ॥
अनुमोदाम महावीर संधाभाष्यं महर्षिणः[1] ।
यथार्थो व्याकृतो ह्येष शारिपुत्रो विशारदः ॥ ३६ ॥
वयमप्येदृशाः स्यामो बुद्धा लोके अनुत्तराः ।
संधाभाष्येण देशेन्तो बुद्धबोधिमनुत्तराम् ॥ ३७ ॥
यच्छ्रुतं[2] कृतमस्माभिरस्मिँल्लोके परत्र वा ।
आरागितश्च यद्बुद्धः[3] प्रार्थना भोतु बोधये ॥ ३८ ॥

---

१ K महर्षिणाम्. २ W यच्छुभं. ३ W संबुद्धः.

अथ खल्वायुष्मान् शारिपुत्रो भगवन्तमेतदवोचत्—निष्काङ्क्षोऽस्मि भगवन् विगतकथंकथो भगवतोऽन्तिकात् संमुखमिदमात्मनो व्याकरणं श्रुत्वा अनुत्तरायां सम्यक्संबोधौ । यानि च इमानि भगवन् द्वादश वशीभूतशतानि भगवता पूर्वं शैक्षभूमौ स्थापितानि एवमववदितानि एवमनुशिष्टान्यभूवन् एतत्पर्यवसानो मे भिक्षवो धर्मविनयो यदिदं जातिजराव्याधिमरणशोकसमतिक्रमो निर्वाणसमवसरणः । इमे च भगवन् द्वे भिक्षुसहस्रे [K 71] शैक्षाशैक्षाणां भगवतः श्रावकाणां सर्वेषामात्मदृष्टिभवदृष्टि[1]विभवदृष्टिसर्वदृष्टिविवर्जितानां निर्वाणभूमिस्थिताः स्मः इत्यात्मनः[2] संजानताम्[3], ते भगवतोऽन्तिकादिममेवंरूपमश्रुतपूर्वं धर्मं श्रुत्वा कथंकथामापन्नाः । तत्साधु भगवान् भाषतामेषां भिक्षूणां कौकृत्यविनोद- [W 69] नार्थं यथा भगवन्नेताश्चतस्रः पर्षदो निष्काङ्क्षा निर्विचिकित्सा भवेयुः ॥

एवमुक्ते भगवानायुष्मन्तं शारिपुत्रमेतदवोचत्—ननु ते मया शारिपुत्र पूर्वमेवाख्यातं यथा नानाभिनिर्हारनिर्देशविविधहेतुकारणनिदर्शनारम्बणनिरुक्त्युपायकौशल्यैर्नानाधिमुक्तानां सत्त्वानां नानाधात्वाशयानामाशयं विदित्वा तथागतोऽर्हन् सम्यक्संबुद्धो धर्मं देशयति । इमामेवानुत्तरां सम्यक्संबोधिमारभ्य सर्वधर्मदेशनाभिर्बोधिसत्त्वयानमेव समादापयति । अपि तु खलु पुनः शारिपुत्र औपम्यं ते करिष्यामि अस्यैवार्थस्य भूयस्या मात्रया संदर्शनार्थम् । तत्कस्य हेतोः ? उपमया इह एकत्या विज्ञपुरुषा भाषितस्यार्थमाजानन्ति ॥

तद्यथापि नाम शारिपुत्र इह स्यात् कस्मिंश्चिदेव ग्रामे वा नगरे वा निगमे वा [N 54] [K 72] जनपदे वा जनपदप्रदेशे वा राष्ट्रे वा राजधान्यां वा गृहपतिर्जीर्णो वृद्धो महल्लकोऽभ्यतीतवयोऽनुप्राप्त आढ्यो महाधनो महाभोगः । महच्चास्य निवेशनं भवेदुच्छ्रितं च विस्तीर्णं च चिरकृतं च जीर्णं च द्वयोर्वा त्रयाणां वा चतुर्णां वा पञ्चानां वा प्राणिशतानामावासः । एकद्वारं च तन्निवेशनं भवेत् । तृणसंछन्नं च भवेत् । विगलितप्रासादं[4] च भवेत् । पूतिस्तम्भमूलं च भवेत् । संशीर्णकुड्यकटलेपनं च भवेत् । तच्च सहसैव महताग्निस्कन्धेन सर्वपार्श्वेषु सर्वावन्तं निवेशनं प्रदीप्तं भवेत् । तस्य च पुरुषस्य बहवः कुमारकाः स्युः पञ्च वा दश वा विंशतिर्वा । स च पुरुषस्तस्मान्निवेशनाद् बहिर्निर्गतः स्यात् ॥

अथ खलु शारिपुत्र स पुरुषस्तं स्वकं निवेशनं महताग्निस्कन्धेन समन्तात् संप्रज्वलितं दृष्ट्वा भीतस्त्रस्त उद्विग्नचित्तो भवेत्, एवं चानुविचिन्तयेत्—प्रतिबलोऽहमनेन महताग्निस्कन्धेनासंस्पृष्टोऽपरिदग्धः क्षिप्रमेव स्वस्तिना अस्माद् गृहादादीप्ताद् द्वारेण[5] निर्गन्तुं निर्धावितुम् । [W 70] अपि तु य इमे ममैव पुत्रा बालकाः कुमारका अस्मिन्नेव निवेशने आदीप्ते तैस्तैः क्रीडनकैः क्रीडन्ति रमन्ति परिचारयन्ति, इमं चागारमादीप्तं न जानन्ति न बुध्यन्ते न विदन्ति न चेतयन्ति नोद्वेगमापद्यन्ते, संतप्यमाना अप्यनेन महताग्निस्कन्धेन महता च दुःखस्कन्धेन स्पृष्टाः समाना न दुःखं मनसि कुर्वन्ति, नापि निर्गमनमनसिकारमुत्पादयन्ति ॥

---

१ K om. °भवदृष्टि°.  २ K आत्मान.  ३ K adds भगवतो after संजानतां.
४ W °प्रसादं.  ५ W दूरेण.

K 73 स च शारिपुत्र पुरुषो बलवान् भवेद् बाहुबलिकः। स एवमनुविचिन्तयेत्—अह-
मस्मि बलवान् बाहुबलिकश्च। यन्वहं सर्वानिमान् कुमारकानेकपिण्डयित्वा उत्सङ्गेनादाय
अस्माद् गृहान्निर्गमयेयम्। स पुनरेवमनुविचिन्तयेत्—इदं खलु निवेशनमेकप्रवेशं संवृतद्वारमेव।
कुमारकाश्चपलाश्चञ्चला बालजातीयाश्च। मा हैव परिभ्रमेयुः। तेऽनेन महताग्नि-
स्कन्धेनानयव्यसनमापद्येरन्। यन्नूनमहमेतान् संचोदयेयम्। इति प्रतिसंख्याय तान्
कुमारकानामन्त्रयते स्म—आगच्छत भवन्तः कुमारकाः, निर्गच्छत। आदीप्तमिदं गृहं महता
N 55 अग्निस्कन्धेन। मा हैवात्रैव सर्वेऽनेन महताग्निस्कन्धेन धक्ष्यथ, अनयव्यसनमापत्स्यथ।
अथ खलु ते कुमारका एवं तस्य हितकामस्य पुरुषस्य तद्भाषितं नावबुध्यन्ते नोद्वि-
जन्ति नोत्रसन्ति न संत्रसन्ति न संत्रासमापद्यन्ते, न विचिन्तयन्ति न निर्धावन्ति, नापि
जानन्ति न विजानन्ति किमेतदादीप्तं नामेति। अन्यत्र तेन तेनैव धावन्ति विधावन्ति,
पुनः पुनश्च तं पितरमवलोकयन्ति। तत्कस्य हेतोः? यथापीदं बालभावत्वात्॥

अथ खलु स पुरुष एवमनुविचिन्तयेत्—आदीप्तमिदं निवेशनं महताग्निस्कन्धेन
संप्रदीप्तम्। मा हैवाहं चेमे च कुमारका इहैवानेन महताग्निस्कन्धेन अनयव्यसनमापत्स्या-
W 71 महे। यन्वहमुपायकौशल्येनेमान् कुमारकान् अस्माद् गृहात् निष्क्रामयेयम्। स च पुरुष-
स्तेषां कुमारकाणामाशयज्ञो भवेत्, अधिमुक्तिं च विजानीयात्। तेषां च कुमारकाणा-
K 74 मनेकविधान्यनेकानि क्रीडनकानि भवेयुर्विविधानि च रमणीयकानीष्टानि कान्तानि प्रियाणि
मनआपानि, तानि च दुर्लभानि भवेयुः॥

अथ खलु स पुरुषस्तेषां कुमारकाणामाशयं जानंस्तान् कुमारकानेतदवोचत्—यानि
तानि कुमारका युष्माकं क्रीडनकानि रमणीयकान्याश्चर्याद्भुतानि, येषामलाभात् संतप्यथ,
नानावर्णानि बहुप्रकाराणि। तद्यथा गोरथकान्यजरथकानि मृगरथकानि। यानि भवता-
मिष्टानि कान्तानि प्रियाणि मनआपानि। तानि च मया सर्वाणि बहिर्निवेशनद्वारे
स्थापितानि युष्माकं क्रीडनहेतोः। आगच्छन्तु भवन्तो निर्धावन्त्वस्मान्निवेशनात्। अहं वो
यस्य यस्य येनार्थो येन प्रयोजनं भविष्यति, तस्मै तस्मै तत्प्रदास्यामि। आगच्छत शीघ्रं तेषां
N 56 कारणम्, निर्धावत। अथ खलु ते कुमारकास्तेषां क्रीडनकानां रमणीयकानामर्थाय यथे-
प्सितानां यथासंकल्पितानामिष्टानां कान्तानां प्रियाणां मनआपानां नामधेयानि श्रुत्वा
तस्मादादीप्तादगारात् क्षिप्रमेवारब्धवीर्या बलवता जवेन अन्योन्यमप्रतीक्षमाणाः कः प्रथमं
कः प्रथमतरमित्यन्योन्यं संघट्टितकायास्तस्मादादीप्तादगारात् क्षिप्रमेव निर्धाविताः॥

K 76
N 57 अथ स पुरुषः क्षेमस्वस्तिना तान् कुमारकान् निर्गतान् दृष्ट्वा अभयप्राप्तानिति
विदित्वा आकाशे ग्रामचत्वरे उपविष्टः प्रीतिप्रामोद्यजातो निरुपादानो विगतनीवरणोऽभय-
प्राप्तो भवेत्। अथ खलु ते कुमारका येन स पिता तेनोपसंक्रामन्, उपसंक्रम्यैवं वदेयुः—
देहि नस्तात तानि विविधानि क्रीडनकानि रमणीयानि। तद्यथा—गोरथकान्यजरथकानि
मृगरथकानि। अथ खलु शारिपुत्र स पुरुषस्तेषां स्वकानां पुत्राणां वातजवसंपन्नान्

गोरथकानेवानुप्रयच्छेत् सप्तरत्नमयान् सवेदिकान् सकिङ्किणीजालाभिप्रलम्बितानुच्चान् प्रगृहीतानाश्चर्याद्भुतरत्नालंकृतान् रत्नदामकृतशोभान् पुष्पमाल्यालंकृतांस्तूलिकागोणिकास्तरणान् दूष्यपटप्रत्यास्तीर्णानुभयतो लोहितोपधानान् श्वेतैः प्रपाण्डरैः शीघ्रजवैर्गोणैर्योजितान् बहुपुरुषपरिगृहीतान् । सवैजयन्तान् गोरथकानेव वातबलजवसंपन्नानेकवर्णानेकविधानेकैकस्य दारकस्य दद्यात् । तत्कस्य हेतोः? तथा हि शारिपुत्र स पुरुष आढ्यश्च भवेन्महाधनश्च प्रभूतकोष्ठागारश्च । स एवं मन्येत[1]– अलं म एषां कुमारकाणामन्यैर्यानैर्दत्तैरिति । तत्कस्य हेतोः? सर्व एवैते कुमारका ममैव पुत्राः, सर्वे च मे प्रिया मनआपाः । संविद्यन्ते च मे इमान्येवंरूपाणि महायानानि । समं च मयैते कुमारकाः सर्वे चिन्तयितव्या न विषमम् । अहमपि बहुकोशकोष्ठागारः । सर्वसत्त्वानामप्यहमिमान्येवंरूपाणि महायानानि दद्याम्, किमङ्ग पुनः स्वकानां पुत्राणाम् । ते च दारकास्तस्मिन् समये तेषु महायानेष्वभिरुह्य आश्चर्याद्भुतप्राप्ता भवेयुः । तत्किं मन्यसे शारिपुत्र मा हैव तस्य पुरुषस्य मृषावादः स्यात्, येन तेषां दारकाणां पूर्वं त्रीणि यानान्युपदर्शयित्वा पश्चात्सर्वेषां महायानान्येव दत्तानि, उदारयानान्येव दत्तानि?

शारिपुत्र आह–न ह्येतद् भगवन्, न ह्येतत् सुगत । अनेनैव तावद् भगवन् कारणेन स पुरुषो न मृषावादी भवेद् यत्तेन पुरुषेणोपायकौशल्येन ते दारकास्तस्मादादीप्ताद् गृहान्निष्कासिताः, जीवितेन च अभिच्छादिताः । तत्कस्य हेतोः? आत्मभावप्रतिलम्भेनैव भगवन् सर्वक्रीडनकानि लब्धानि भवन्ति । यद्यपि तावद् भगवन् स पुरुषस्तेषां कुमारकाणामेकरथमपि न दद्यात्, तथापि तावद् भगवन् स पुरुषो न मृषावादी भवेत् । तत्कस्य हेतोः? तथा हि भगवंस्तेन पुरुषेण पूर्वमेव एवमनुविचिन्तितम्–उपायकौशल्येन अहमिमान् कुमारकांस्तस्मान्महतो दुःखस्कन्धात् परिमोचयिष्यामीति । अनेनापि भगवन् पर्यायेण तस्य पुरुषस्य न मृषावादो भवेत् । कः पुनर्वादो यत्तेन पुरुषेण प्रभूतकोश- K 77
कोष्ठागारमस्तीति कृत्वा पुत्रप्रियतामेव मन्यमानेन श्लाघमानेनैकवर्णान्येकयानानि दत्तानि, W 73
यदुत महायानानि । नास्ति भगवंस्तस्य पुरुषस्य मृषावादः ॥

एवमुक्ते भगवानायुष्मन्तं शारिपुत्रमेतदवोचत्–साधु साधु शारिपुत्र । एवमेत- N 58
च्छारिपुत्र, एवमेतद् यथा वदसि । एवमेव शारिपुत्र तथागतोऽर्हन् सम्यक्संबुद्धः सर्वभयविनिवृत्तः सर्वोपद्रवोपायासोपसर्गदुःखदौर्मनस्याविद्यान्धकारतमस्तिमिरपटलपर्यवनाहेभ्यः सर्वेण सर्वं सर्वथा विप्रमुक्तः । तथागतो ज्ञानबलवैशारद्यावेणिकबुद्धधर्मसमन्वागतः ऋद्धिबलेनातिबलवाँल्लोकपिता, महोपायकौशल्यज्ञानपरमपारमिताप्राप्तो महाकारुणिकोऽपरिखिन्नमानसो हितैषी अनुकम्पकः । स त्रैधातुके महता दुःखदौर्मनस्यस्कन्धेन आदीप्तजीर्णपटलशरणनिवेशनसदृश उत्पद्यते सत्त्वानां जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासाविद्यान्धकारतमस्तिमिरपटलपर्यवनाहप्रतिष्ठानां रागद्वेषमोहपरिमोचनहेतोरनुत्तरायां

1 K पश्येत्.

सम्यक्संबोधौ समादापनहेतोः । स उत्पन्नः समानः पश्यति सत्त्वान् दह्यतः पच्यमानां-
स्तप्यमानान् परितप्यमानान् जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासैः,
परिभोगनिमित्तं च कामहेतुनिदानं च अनेकविधानि दुःखानि प्रत्यनुभवन्ति । दृष्ट-
धार्मिकं च पर्येष्टिनिदानं परिग्रहनिदानं सांपरायिकं नरकतिर्यग्योनियमलोके-
K 78 ष्वनेकविधानि दुःखानि प्रत्यनुभविष्यन्ति । देवमनुष्यदारिद्र्यमनिष्टसंयोगमिष्टविनाभाविकानि
च दुःखानि प्रत्यनुभवन्ति । तत्रैव च दुःखस्कन्धे परिवर्तमानाः क्रीडन्ति रमन्ते परिचार-
यन्ति नोत्रसन्ति न संत्रसन्ति न संत्रासमापद्यन्ते न बुध्यन्ते न चेतयन्ति नोद्विजन्ति न
निःसरणं पर्येषन्ते । तत्रैव च आदीप्तागारसदृशे त्रैधातुकेऽभिरमन्ति, तेन तेनैव विधावन्ति ।
तेन च महता दुःखस्कन्धेन अभ्याहता न दुःखमनसिकारसंज्ञामुत्पादयन्ति ॥

W 74 N 59 तत्र शारिपुत्र तथागत एवं पश्यति—अहं खल्वेषां सत्त्वानां पिता । मया ह्येते
सत्त्वा अस्मादेवंरूपान्महतो दुःखस्कन्धात् परिमोचयितव्याः, मया चैषां सत्त्वानामप्रमेय-
मचिन्त्यं बुद्धज्ञानसुखं दातव्यम्, येनैते सत्त्वाः क्रीडिष्यन्ति रमिष्यन्ति परिचारयिष्यन्ति,
विक्रीडितानि च करिष्यन्ति ॥

तत्र शारिपुत्र तथागत एवं पश्यति—सचेदहं ज्ञानबलोऽस्मीति कृत्वा ऋद्धिबलो-
ऽस्मीति कृत्वा अनुपायेनैषां सत्त्वानां तथागतज्ञानबलवैशारद्यानि संश्रावयेयम्, नैते सत्त्वा
एभिर्धर्मैर्निर्यायेयुः । तत्कस्य हेतोः ? अध्यवसिता ह्यमी सत्त्वाः पञ्चसु कामगुणेषु त्रैधातुक-
रत्याम् । अपरिमुक्ता जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासेभ्यः । दह्यन्ते
पच्यन्ते तप्यन्ते परितप्यन्ते । अनिर्धावितास्त्रैधातुकादादीप्तजीर्णपटलशरणनिवेशनसदृशात्
कथमेते बुद्धज्ञानं परिभोत्स्यन्ते ?

K 79 तत्र शारिपुत्र तथागतो यद्यथापि नाम स पुरुषो बाहुबलिकः स्थापयित्वा बाहुबलम्,
उपायकौशल्येन तान् कुमारकांस्तस्मादादीप्तादगारान्निष्कासयेत्, निष्कासयित्वा च तेषां
पश्चादुदाराणि महायानानि दद्यात्, एवमेव शारिपुत्र तथागतोऽप्यर्हन् सम्यक्संबुद्धस्तथागत-
ज्ञानबलवैशारद्यसमन्वागतः स्थापयित्वा तथागतज्ञानबलवैशारद्यम्, उपायकौशल्यज्ञानेनादीप्त-
जीर्णपटलशरणनिवेशनसदृशात् त्रैधातुकात् सत्त्वानां निष्कासनहेतोस्त्रीणि यानान्युपदर्शयति
यदुत श्रावकयानं प्रत्येकबुद्धयानं बोधिसत्त्वयानमिति । त्रिभिश्च यानैः सत्त्वाँल्लोभयति, एवं
चैषां वदति—मा भवन्तोऽस्मिन्नादीप्तागारसदृशे त्रैधातुकेऽभिरमध्वं हीनेषु रूपशब्दगन्धरस-
स्पर्शेषु । अत्र हि यूयं त्रैधातुकेऽभिरताः पञ्चकामगुणसहगतया तृष्णया दह्यथ तप्यथ
परितप्यथ । निर्धावध्वमस्मात् त्रैधातुकात् । त्रीणि यानान्यनुप्राप्स्यथ यदिदं श्रावकयानं
N 60 प्रत्येकबुद्धयानं बोधिसत्त्वयानमिति । अहं वोऽत्र स्थाने प्रतिभूः । अहं वो दास्याम्येतानि
W 75 त्रीणि यानानि । अभियुज्यध्वे त्रैधातुकान्निःसरणहेतोः । एवं चैताँल्लोभयामि—एतानि भोः
सत्त्वा यानि आर्याणि च आर्यप्रशस्तानि च महारमणीयकसमन्वागतानि च । अकृपणमेतैर्भवन्तः
K 80 क्रीडिष्यथ रमिष्यथ परिचारयिष्यथ । इन्द्रियबलबोध्यङ्गध्यानविमोक्षसमाधिसमापत्तिभिश्च
महतीं रतिं प्रत्यनुभविष्यथ । महता च सुखसौमनस्येन समन्वागता भविष्यथ ॥

तत्र शारिपुत्र ये सत्त्वाः पण्डितजातीया भवन्ति, ते तथागतस्य लोकपितुरभिश्रद्द-
धन्ति । अभिश्रद्दधित्वा च तथागतशासनेऽभियुज्यन्ते उद्योगमापद्यन्ते । तत्र केचित्
सत्त्वा परघोषश्रवानुगमनमाकाङ्क्षमाणा आत्मपरिनिर्वाणहेतोश्चतुरार्यसत्यानुबोधाय तथागत-
शासनेऽभियुज्यन्ते । ते उच्यन्ते श्रावकयानमाकाङ्क्षमाणाः त्रैधातुकान्निर्धावन्ति । तद्यथापि
नाम तस्मादादीप्ताद[१]गारादन्यतरे दारका मृगरथमाकाङ्क्षमाणा निर्धाविताः । अन्ये
सत्त्वा अनाचार्यकं ज्ञानं दमशमथमाकाङ्क्षमाणा आत्मपरिनिर्वाणहेतोर्हेतुप्रत्ययानुबोधाय
तथागतशासनेऽभियुज्यन्ते, ते उच्यन्ते प्रत्येकबुद्धयानमाकाङ्क्षमाणास्त्रैधातुकान्निर्धावन्ति ।
तद्यथापि नाम तस्मादादीप्ताद[१]गारादन्यतरे दारका अजरथमाङ्क्षमाणा निर्धाविताः। अपरे पुनः
सत्त्वाः[२] सर्वज्ञज्ञानं बुद्धज्ञानं स्वयंभूज्ञानमनाचार्यकं ज्ञानमाकाङ्क्षमाणा बहुजनहिताय बहुजन- K 81
सुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च
सर्वसत्त्वपरिनिर्वाणहेतोस्तथागतज्ञानबलवैशारद्यानुबोधाय तथागतशासनेऽभियुज्यन्ते । ते
उच्यन्ते महायानमाकाङ्क्षमाणास्त्रैधातुकान्निर्धावन्ति । तेन कारणेनोच्यन्ते बोधिसत्त्वा
महासत्त्वा इति । तद्यथापि नाम तस्मादादीप्तादगारादन्यतरे दारका गोरथमाकाङ्क्षमाणा
निर्धाविताः । तद्यथापि नाम शारिपुत्र स पुरुषस्तान् कुमारकांस्तस्मादादीप्तादगारा-
न्निर्धावितान् दृष्ट्वा क्षेमस्वस्तिभ्यां परिमुक्तानभयप्राप्तानिति विदित्वा आत्मानं च महाधनं
विदित्वा तेषां दारकाणामेकमेव यानमुदारमनुप्रयच्छेत्, एवमेव शारिपुत्र तथागतोऽप्यर्हन् W 76
सम्यक्संबुद्धो यदा पश्यति—अनेकाः सत्त्वकोटीस्त्रैधातुकात् परिमुक्ता दुःखभयभैरवो-
पद्रवपरिमुक्तास्तथागतशासन[३]द्वारेण निर्धाविताः परिमुक्ताः सर्वभयोपद्रवकान्तारेभ्यः ।
निर्वृतिसुखप्राप्ताः निर्वृतिसुखप्राप्ताः । तानेतान् शारिपुत्र तस्मिन् समये तथागतोऽर्हन् N 61
सम्यक्संबुद्धः प्रभूतो महाज्ञानबलवैशारद्यकोश इति विदित्वा सर्वे चैते ममैव पुत्रा इति
ज्ञात्वा बुद्धयानेनैव तान् सत्त्वान् परिनिर्वापयति । न च कस्यचित् सत्त्वस्य प्रत्यात्मिकं
परिनिर्वाणं वदति । सर्वांश्च तान् सत्त्वांस्तथागतपरिनिर्वाणेन महापरिनिर्वाणेन परिनिर्वाप- K 82
यति । ये चापि ते शारिपुत्र सत्त्वास्त्रैधातुकात् परिमुक्ता भवन्ति, तेषां तथागतो ध्यानवि-
मोक्षसमाधिसमापत्तीरार्याणि परमसुखानि क्रीडनकानि रमणीयकानि ददाति, सर्वाण्येतान्येक-
वर्णानि । तद्यथापि नाम शारिपुत्र तस्य पुरुषस्य न मृषावादो भवेत्, येन त्रीणि
यानान्युपदर्शयित्वा तेषां कुमारकाणामेकमेव महायानं सर्वेषां दत्तं सप्तरत्नमयं सर्वालंकार-
विभूषितमेकवर्णमेव उदारयानमेव सर्वेषामग्रयानमेव दत्तं भवेत् । एवमेव शारिपुत्र
तथागतोऽप्यर्हन् सम्यक्संबुद्धो न मृषावादी भवति, येन पूर्वमुपायकौशल्येन त्रीणि
यानान्युपदर्शयित्वा पश्चान्महायानेनैव सत्त्वान् परिनिर्वापयति । तत्कस्य हेतोः ? तथागतो
हि शारिपुत्र प्रभूतज्ञानबलवैशारद्यकोशकोष्ठागारसमन्वागतः प्रतिबलः सर्वसत्त्वानां सर्वज्ञ-

१ W आदीप्तागाराद्. २ W om. सत्त्वाः. ३ K °शासने द्वारेण.

ज्ञानसहगतं धर्ममुपदर्शयितुम्। अनेनापि शारिपुत्र पर्यायेणैवं वेदितव्यम्, यथा उपायकौशल्यज्ञानाभिनिर्हारैस्तथागत एकमेव महायानं देशयति ॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत–

यथा हि पुरुषस्य भवेदगारं
जीर्णं महन्तं च सुदुर्बलं च।
विशीर्ण प्रासादु तथा भवेत
W 77 K 83 स्तम्भाश्च मूलेषु भवेयु पूतिकाः ॥ ३९ ॥
गवाक्षहर्म्या गलितैकदेशा
विशीर्ण कुड्यं कटलेपनं च।
जीर्णु प्रवृ[1]द्धोद्धृतवेदिकं च
तृणच्छदं सर्वत ओपतन्तम् ॥ ४० ॥
शतान पञ्चान अनूनकानां
आवासु सो तत्र भवेत प्राणिनाम्।
बहूनि चा निष्कुटसंकटानि
उच्चारपूर्णानि जुगुप्सितानि ॥ ४१ ॥
गोपानसी विगलित तत्र सर्वा
कुड्याश्च भित्तीश्च तथैव स्रस्ताः।
गृध्राण कोट्यो निवसन्ति तत्र
पारावतोलूक तथान्यपक्षिणः ॥ ४२ ॥
आशीविषा दारुण तत्र सन्ति
देशे[2]प्रदेशेषु महाविषोग्राः।
विचित्रिका वृश्चिकमूषिकाश्च
एतान आवासु सुदुष्टप्राणिनाम् ॥ ४३ ॥
N 62 देशे च देशे[3] अमनुष्य भूयो
उच्चारप्रस्रावविनाशितं च।
कृमिकीटखद्योतकर्पू[4]रितं च
श्वभिः शृगालैश्च निनादितं च ॥ ४४ ॥
भेरुण्डका दारुण तत्र सन्ति
मनुष्यकुणपानि च[5] भक्षयन्तः।
तेषां च निर्याणु प्रतीक्षमाणाः
W 78 श्वानाः शृगालाश्च वसन्त्यनेके ॥ ४५ ॥

१ K जीर्णप्रवृद्धं धुतवेदिकं च for the line. २ K देशे प्र°. ३ K देशे च अमनुष्य°. ४ K °पूतिकं च. ५ K विभक्षयन्तः for च भक्ष°.

ते दुर्बला नित्य क्षुधाभिभूता
देशेषु देशेषु विखादमानाः ।
कलहं करोन्ताश्च निनादयन्ति
सुभैरवं तद्गृहमेवरूपम् ॥ ४६ ॥
सुरौद्रचित्ता पि वसन्ति यक्षा K 84
मनुष्यकुणपानि विकड्डमानाः ।
देशेषु देशेषु वसन्ति तत्र
शतापदी गोनसकाश्च व्यालाः ॥ ४७ ॥
देशेषु देशेषु च निक्षिपन्ति
तें पोतकान्यालयनानि कृत्वा ।
न्यस्तानि न्यस्तानि च तानि तेषां
ते यक्ष भूयो परिभक्षयन्ति ॥ ४८ ॥
यदा च ते यक्ष भवन्ति तृप्ताः
परसत्त्व खादित्व सुरौद्रचित्ताः ।
परसत्त्वमांसैः परितृप्तगात्राः
कलहं तदा तत्र करोन्ति तीव्रम् ॥ ४९ ॥
विध्वस्तलेनेषु वसन्ति तत्र
कुम्भाण्डका दारुणरौद्रचित्ताः ।
वितस्तिमात्रास्तथ हस्तमात्रा
द्विहस्तमात्राश्चनुचंक्रमन्ति ॥ ५० ॥
ते चापि श्वानान् परिगृह्य पादै-
रुत्तानकान् कृत्व तथैव भूमौ ।
ग्रीवासु चोत्पीड्य विभर्त्सयन्तो[1]
व्याबाधयन्तश्च[2] रमन्ति तत्र ॥ ५१ ॥
नानाश्च कृष्णाश्च तथैव दुर्बला
उच्चा महन्ताश्च वसन्ति प्रेताः । W 79
जिघत्सिता भोजन मार्गमाणा
आर्तस्वरं क्रन्दिषु तत्र तत्र ॥ ५२ ॥
सूचीमुखा गोणमुखाश्च केचित्
मनुष्यमात्रास्तथ श्वानमात्राः ।

१ K वितंसयन्तो. २ K व्यायातयन्तश्च.

प्रकीर्णकेशाश्च करोन्ति शब्द-
माहारतृष्णापरिदह्यमानाः ॥ ५३ ॥

K 85 चतुर्दिशं चात्र विलोकयन्ति
गवाक्षउल्लोकनकेहि नित्यम्।
ते यक्ष प्रेताश्च पिशाचकाश्च
गृध्राश्च आहार गवेषमाणाः ॥ ५४ ॥

N 63 एतादृशं भैरवु तद् गृहं भवेत्
महन्तमुच्चं च सुदुर्बलं च।
विजर्जरं दुर्बलमित्वरं च
पुरुषस्य एकस्य परिग्रहं भवेत् ॥ ५५ ॥

स च बाह्यतः स्यात्पुरुषो गृहस्य
निवेशनं तच्च भवेत्प्रदीप्तम्।
सहसा समन्तेन चतुर्दिशं च
ज्वालासहस्रैः परिदीप्यमानम् ॥ ५६ ॥

वंशाश्च दारूणि च अग्नितापिताः
करोन्ति शब्दं गुरुकं सुभैरवम्।
प्रदीप्त स्तम्भाश्च तथैव भित्तयो
यक्षाश्च प्रेताश्च मुचन्ति नादम् ॥ ५७ ॥

ज्वाल्लषिता[1] गृध्रशताश्च भूयः
कुम्भाण्डकाः प्लोष्टमुखा भ्रमन्ति।
समन्ततो व्यालशताश्च तत्र
नदन्ति क्रोशन्ति च दह्यमानाः ॥ ५८ ॥

W 80 पिशाचकास्तत्र बहू भ्रमन्ति
संतापिता अग्निन मन्दपुण्याः।
दन्तेहि पाटित्व ति अन्यमन्यं
रुधिरेण सिञ्चन्ति च दह्यमानाः ॥ ५९ ॥

भेरुण्डकाः कालगताश्च तत्र
खादन्ति सत्त्वाश्च ति अन्यमन्यम्।
उच्चार दह्यत्यमनोज्ञगन्धः
प्रवायते लोकि चतुर्दिशासु ॥ ६० ॥

---

१ K संल्लषिता.

शतापदीयो प्रपलायमानाः K 86
कुम्भाण्डकास्ताः परिभक्षयन्ति ।
प्रदीप्तकेशाश्च भ्रमन्ति प्रेताः
क्षुधाय दाहेन च दह्यमानाः ॥ ६१ ॥

एतादृशं भैरव तन्निवेशनं N 64
ज्वालासहस्रैर्हि विनिश्चरद्भिः ।
पुरुषश्च सो तस्य गृहस्य स्वामी
द्वारस्मि अस्थासि विपश्यमानः ॥ ६२ ॥

शृणोति चासौ स्वके अत्र पुत्रान्
क्रीडापनैः[1] क्रीडनसक्तबुद्धीन् ।
रमन्ति ते क्रीडनकप्रमत्ता
यथापि बाला अविजानमानाः ॥ ६३ ॥

श्रुत्वा च सो तत्र प्रविष्टु क्षिप्रं
प्रमोचनार्थाय तदात्मजानाम् ।
मा मह्य बाला इमि सर्व दारका
दह्येयु नश्येयु च क्षिप्रमेव ॥ ६४ ॥

स भाषते तेषमगारदोषान्
दुःखं इदं भोः कुलपुत्र दारुणम् ।
विविधाश्च सत्त्वेह अयं च अग्नि W 81
महन्तिका दुःखपरंपरा[2] तु ॥ ६५ ॥

आशीविषा यक्ष सुरौद्रचित्ताः
कुम्भाण्ड प्रेता बहवो वसन्ति ।
भेरुण्डकाः श्वानशृगालसंघा
गृध्राश्च आहार गवेषमाणाः ॥ ६६ ॥

एतादृशास्मिन्[3] बहवो वसन्ति
विनापि चाग्नेः परमं सुभैरवम् ।
दुःखं इदं केवलमेवरूपं
समन्ततश्चाग्निरयं प्रदीप्तः ॥ ६७ ॥

ते चोद्यमानास्तथ बालबुद्धयः K 87
कुमारकाः क्रीडनके प्रमत्ताः ।

१ W क्रीडापनक°. २ K °परंपरात्र. ३ K एतादृशात्र.

न चिन्तयन्ते पितरं भणन्तं
　न चापि तेषां मनसीकरोन्ति ॥ ६८ ॥

N 65 पुरुषश्च सो तत्र तदा विचिन्तयेत्
　सुदुःखितोऽस्मी इह पुत्रचिन्तया।
किं मह्य पुत्रेहि अपुत्रकस्य
　मा नाम दह्येयुरिहाग्निना इमे ॥ ६९ ॥

उपायु सो चिन्तयि तस्मि काले
　लुब्धा इमे क्रीडनकेषु बालाः।
न चात्र क्रीडा च रती च काचिद्
　बालान हो[1] यादृशु मूढभावः ॥ ७० ॥

स तानवोचच्छृणुथा कुमारका
　नानाविधा यानक या ममास्ति।
W 82 मृगैरजैर्गोणवरैश्च युक्ता
　उच्चा महन्ता समलंकृता च ॥ ७१ ॥

ता बाह्यतो अस्य निवेशनस्य
　निर्धावथा तेहि करोथ कार्यम्।
युष्माकमर्थे मय कारितानि
　निर्याथ तैस्तुष्टमनाः समेत्य ॥ ७२ ॥

ते यान एतादृशका निशाम्य
　आरब्धवीर्यास्त्वरिता हि भूत्वा।
निर्धाविताास्तत्क्षणमेव सर्वे
　आकाशि तिष्ठन्ति दुखेन मुक्ताः ॥ ७३ ॥

K 88 पुरुषश्च सो निर्गत[2] दृष्ट दारकान्
　ग्रामस्य मध्ये स्थितु चत्वरस्मिन्।
उपविश्य सिंहासनि तानुवाच
　अहो अहं निर्वृतु अद्य मार्षाः ॥ ७४ ॥

ये दुःखलब्धा मम ते तपस्विनः
　पुत्राः प्रिया ओरस विंश बालाः।
ते दारुणे दुर्गगृहे अभूवन्
　बहुजन्तूपूर्णे च सुभैरवे च ॥ ७५ ॥

---

१ K हे. २ K निर्गति.

आदीप्तके ज्वालसहस्रपूर्णे N 66
रता च ते क्रीडरतीषु आसन् ।
मया च ते मोचित अद्य सर्वे
येनाहु[1] निर्वाणु समागतोऽद्य ॥ ७६ ॥

सुखस्थितं तं पितरं विदित्वा
उपगम्य ते दारक एवमाहुः ।
ददाहि नस्तात यथाभिभाषितं
त्रिविधानि यानानि मनोरमाणि ॥ ७७ ॥

सचेत्तेव[2] सत्यक तात सर्वं W 83
यद्भाषितं तत्र निवेशने ते ।
त्रिविधानि यानानि ह संप्रदास्ये
ददस्व कालोऽयमिहाद्य तेषाम् ॥ ७८ ॥

पुरुषश्च सो कोशबली भवेत
सुवर्णरूप्यामणिमुक्तकस्य ।
हिरण्य दासाश्च अनल्पकाः स्यु-
रुपस्थपे[3] एकविधा स याना ॥ ७९ ॥

रत्नामयीं[4] गोणरथा विशिष्टा K 89
सवेदिकाः किङ्किणिजालनद्धाः ।
छत्रध्वजेभिः समलंकृताश्च[5]
मुक्तामणीजालिकछादिताश्च[6] ॥ ८० ॥

सुवर्णपुष्पाण कृतैश्च[7] दामै-
र्देशेषु देशेषु प्रलम्बमानैः ।
वस्त्रैरुदारैः परिसंवृताश्च
प्रत्यास्तृता[8] दूष्यवरैश्च शुक्लैः ॥ ८१ ॥

मृदुकान पट्टान तथैव तत्र
वरतूलिकासंस्तृत येऽपि ते रथाः ।
प्रत्यास्तृताः कोटिसहस्रमूल्यै-
र्वरैश्च कोच्कै[9]र्बकहंसलक्षणैः ॥ ८२ ॥ W 84

---

१ K येनाह. २ W सचैव तं. ३ K उपस्थायकानेकविधा न याना. ४ W रत्नामयान् गोणरथान् विशिष्टान् सवेदिकान् किङ्किणिजालनद्धान्. ५ W समलंकृतांश्च. ६ W °छादितांश्च. ७ W सहस्रदामैः. ८ W प्रत्यास्तृतान्. ९ W कोटम्बक°.

श्वेताः सुपुष्टा बलवन्त गोणा
महाप्रमाणा अभिदर्शनीयाः।
ये योजिता रत्नरथेषु तेषु
परिगृहीताः पुरुषैरनेकैः॥ ८३॥
N 67 एतादृशान् सो पुरुषो ददाति
पुत्राण सर्वाण वरान् विशिष्टान्।
ते चापि तुष्टा[1]त्तमनाश्च तेहि
दिशाश्च विदिशाश्च व्रजन्ति क्रीडकाः॥ ८४॥
एमे[2]वे हं शारिसुता महर्षी
सत्त्वान त्राणं च पिता च भोमि।
पुत्राश्च ते प्राणिन सर्वि मह्यं
त्रैधातुके कामविलग्न बालाः॥ ८५॥
त्रैधातुकं चो यथ तन्निवेशनं
सुभैरवं दुःखशताभिकीर्णम्।
अशेषतः प्रज्वलितं समन्ता-
ज्जातीजराव्याधिशतैरनेकैः॥ ८६॥
K 90 अहं च त्रैधातुकमुक्त शान्तो
एकान्तस्थायी पवने वसामि।
त्रैधातुकं चो ममिदं परिग्रहो
ये ह्यत्र दह्यन्ति ममैति पुत्राः॥ ८७॥
अहं च आदीनव तत्र दर्शयी
विदित्व त्राणं अहमेव चैषाम्।
न चैव मे ते श्रुणि सर्वि बाला
W 85 यथापि कामेषु विलग्नबुद्धयः॥ ८८॥
उपायकौशल्यमहं प्रयोजयी
यानानि त्रीणि प्रवदामि चैषाम्।
ज्ञात्वा च त्रैधातुकि नेकदोषान्
निर्धावनार्थाय वदाम्युपायम्॥ ८९॥
मां चैव ये निश्रित भोन्ति पुत्राः
षडभिज्ञ त्रैविद्य महानुभावाः।

---

१ K तुष्टान्त°. २ K एवमेव for एमेव.

प्रत्येकबुद्धाश्च भवन्ति येऽत्र
　अविवर्तिका ये चिह बोधिसत्त्वाः ॥ ९० ॥
समान पुत्राण ह्यु तेष तत्क्षण-
　मिमेन दृष्टान्तवरेण पण्डित ।
वदामि एकं इमु बुद्धयानं
　परिगृह्णथा सर्वि जिना भविष्यथ ॥ ९१ ॥
तच्चा वरिष्ठं सुमनोरमं च
　विशिष्टरूपं चिह सर्वलोके ।
बुद्धान ज्ञानं द्विपदोत्तमाना-
　मुदाररूपं तथ वन्दनीयम् ॥ ९२ ॥
बलानि ध्यानानि तथा विमोक्षाः K 91
　समाधिनां कोटिशता च नेका ।
अयं रथो ईदृशको वरिष्ठो
　रमन्ति येनो[1] सद बुद्धपुत्राः ॥ ९३ ॥
क्रीडन्त[2] एतेन क्षपेन्ति रात्रयो
　दिवसांश्च पक्षानृतवोऽथ मासान् ।
संवत्सरानन्तरकल्पमेव च
　क्षपेन्ति कल्पान सहस्रकोट्यः ॥ ९४ ॥
रत्नामयं यानमिदं वरिष्ठं
　गच्छन्ति येनो[1] इह बोधिमण्डे ।
विक्रीडमाना बहुबोधिसत्त्वा W 86
　ये चो शृणोन्ती सुगतस्य श्रावकाः ॥ ९५ ॥
एवं प्रजानाहि त्वमद्य तिष्य
　नास्तीह यानं द्वितियं कहिंचित् ।
दिशो द[3]शा सर्व गवेषयित्वा
　स्थापेत्वुपायं पुरुषोत्तमानाम् ॥ ९६ ॥
पुत्रा ममा यूयमहं पिता वो N 68
　मया च निष्कासित यूय दुःखात् ।
परिदह्यमाना बहुकल्पकोटय-
　स्त्रैधातुकातो भयभैरवातः ॥ ९७ ॥

---

१ K येन. २ K क्रीडन्ति. ३ K दश.

एवं च हं तत्र वदामि निर्वृति-
मनिर्वृता यूय तथैव चाद्य ।
संसारदुःखादिह यूय मुक्ता
बौद्धं तु यानं व[1] गवेषितव्यम् ॥ ९८ ॥
K 92 ये बोधिसत्त्वाश्च इहास्ति केचि-
च्छृण्वन्ति सर्वे मम बुद्धनेत्रीम् ।
उपायकौशल्यमिदं जिनस्य
येनो विनेती बहुबोधिसत्त्वान् ॥ ९९ ॥
हीनेषु कामेषु जुगुप्सितेषु
रता यदा भोन्तिमि अत्र[2] सत्त्वाः ।
दुःखं तदा भाषति लोकनायको
अनन्यथावादिरिहार्यसत्यम् ॥ १०० ॥
ये चापि दुःखस्य अजानमाना
मूलं न पश्यन्तिह बालबुद्धयः ।
मार्गं हि तेषामनुदर्शयामि
W 87 समुदागमस्[3]तृष्ण दुखस्य संभवः ॥ १०१ ॥
तृष्णानिरोधोऽर्थे[4] सदा अनिश्रिता
निरोधसत्यं तृतियं इदं मे ।
अनन्यथा येन च मुच्यते नरो
मार्गं हि भावित्व विमुक्त भोति ॥ १०२ ॥
कुतश्च ते शारिसुता विमुक्ता
असन्तग्राहातु विमुक्त भोन्ति ।
न च ताव ते सर्वत मुक्त भोन्ति
अनिर्वृतांस्तान् वदतीह नायकः ॥ १०३ ॥
किंकारणं नास्य वदामि मोक्ष[5]-
मप्राप्यिमामुत्तममग्रबोधिम् ।
ममैष छन्दो अहु धर्मराजा
सुखापनार्थायिह लोकि जातः ॥ १०४ ॥
इय शारिपुत्रा मम धर्ममुद्रा
या पश्चिमे[6] कालि मयाद्य भाषिता ।

---

१ K च. २ K यत्र. ३ W समुदागतास्तृष्ण. ४ K °निरोधार्थ. ५ K मोक्षम॰प्राप्तिमाम्. ६ K पश्चकाले मम अद्य भाषिता.

हिताय लोकस्य सदेवकस्य
　　दिशासु विदिशासु च देशयस्व ॥ १०५ ॥
यश्चापि ते भाषेति[1] कश्चि सत्त्वो K 93
　　अनुमोदयामीति वदेत वाचम् ।
मूर्ध्नेन चेदं प्रतिगृह्य सूत्रं
　　अविवर्तिकं तं नरु धारयेस्त्वम् ॥ १०६ ॥
दृष्टाश्च तेनो पुरिमास्तथागताः W 88
　　सत्कारु तेषां च कृतो अभूषि ।
श्रुतश्च धर्मो अयमेवरूपो
　　य एत सूत्रं अभिश्रद्दधेत ॥ १०७ ॥
अहं च त्वं चैव भवेत दृष्टो
　　अयं च सर्वो मम भिक्षुसंघः ।
दृष्टाश्च सर्वे इमि बोधिसत्त्वा
　　ये श्रद्दधे भाषितमेत[2] मह्यम् ॥ १०८ ॥
सूत्रं इमं बालजनप्रमोहन- N 69
　　मभिज्ञ[3]ज्ञानान मि एतु भाषितम् ।
विषयो हि नैवास्तिह श्रावकाणां
　　प्रत्येकबुद्धान गतिर्न चात्र ॥ १०९ ॥
अधिमुक्तिसारस्तुव शारिपुत्र
　　किं वा पुनर्मह्य इमेऽन्यश्रावकाः ।
एतेऽपि श्रद्धाय ममैव यान्ति
　　प्रत्यात्मिकं ज्ञानु न चैव विद्यते ॥ ११० ॥
मा चैव त्वं स्तम्भिषु मा च मानिषु
　　मायुक्तयोगीन वदेसि एतत् ।
बाला हि कामेषु सदा प्रमत्ता
　　अजानका धर्मु क्षिपेयु भाषितम् ॥ १११ ॥
उपायकौशल्य क्षिपित्वे[4] मह्यं
　　या बुद्धनेत्री सद लोकि संस्थिता ।
भ्रूकुटिं करित्वान क्षिपित्व यानं
　　विपाकु तस्येह शृणोहि तीव्रम् ॥ ११२ ॥

---

१ W भाषिति. २ K भाषितमग्र. ३ K अभिज्ञ ज्ञात्वा न ममैत भाषितम् for the line.
४ W क्षिपित्वा.

K 94 क्षिपित्व सूत्रं इदमेवरूपं
मयि तिष्ठमाने परिनिर्वृते वा ।
W 89 भिक्षूषु वा तेषु खिलानि कृत्वा
तेषां विपाकं म[1]मिहं शृणोहि ॥ ११३ ॥
च्युत्वा मनुष्येषु अवीचि तेषां
प्रतिष्ठ भोती परिपूर्णकल्[2]पात् ।
ततश्च भूयोऽन्तरकल्प नेकां-
[3]श्च्युताश्च्युतास्तत्र पतन्ति बालाः ॥ ११४ ॥
यदा च नरकेषु च्युता भवन्ति
ततश्च तिर्यक्षु व्रजन्ति भूयः ।
सुदुर्बलाः श्वानशृगालभूताः
परे[4]षं क्रीडापनका भवन्ति ॥ ११५ ॥
वर्णेन ते कालक तत्र भोन्ति
कल्माषका व्राणिक कण्डुलाश्च ।
निर्लोमका दुर्बल भोन्ति भूयो
विद्वेषमाणा मम अग्रबोधिम् ॥ ११६ ॥
जुगुप्सिता प्राणिषु नित्य भोन्ति
लोष्टप्रहाराभिहता रुदन्तः ।
दण्डेन[5] संत्रासित तत्र तत्र
क्षुधापिपासाहत शुष्कगात्राः ॥ ११७ ॥
उष्ट्राथ वा गर्दभ भोन्ति भूयो
भारं वहन्तः कशदण्डताडिताः ।
आहारचिन्तामनुचिन्तयन्तो
ये बुद्धनेत्री क्षिपि बालबुद्धयः ॥ ११८ ॥
पुनश्च ते क्रोष्टुक भोन्ति तत्र
W 90 बीभत्सकाः काणक कुण्[6]ठकाश्च ।
उत्पीडिता ग्रामकुमारकेहि
लोष्टप्रहाराभिहताश्च बालाः ॥ ११९ ॥
K 95 ततश्च्यवित्वान च भूयु बालाः
पञ्चाशतीनां सम योजनानाम् ।

---

१ W मयिहं. २ K °कल्पान्. ३ K च्युताश्च तत्र प्रपतन्ति बालाः for the line.
४ W परेषु. ५ K दण्डेषु. ६ K N कुण्डकाश्च.

दीर्घात्मभावा हि भवन्ति प्राणिनो
जडाश्च मूढाः परिवर्तमानाः ॥ १२० ॥
अपादका भोन्ति च क्रोडसक्किनो N 70
विखाद्यमाना बहुप्राणिकोटिभिः।
सुदारुणां ते अनुभोन्ति वेदनां
क्षिपित्व सूत्रं इदमेवरूपम् ॥ १२१ ॥
पुरुषात्मभावं च यदा लभन्ते
ते कुण्ठका लङ्कक भोन्ति तत्र।
कुब्जाथ काणा च जडा जघन्या
अश्रद्दधन्ता इम सूत्र मह्यम् ॥ १२२ ॥
अप्रत्यनीयाश्च भवन्ति लोके
पूती मुखात्तेष प्रवाति गन्धः।
यक्षग्रहो उक्रमि तेष काये
अश्रद्दधन्तानिम बुद्धबोधिम् ॥ १२३ ॥
दरिद्रका पेषणकारकाश्च
उपस्थायका नित्य परस्य दुर्बलाः।
आबाध तेषां बहुकाश्च भोन्ति
अनाथभूता विहरन्ति लोके ॥ १२४ ॥ W 91
यस्यैव ते तत्र करोन्ति सेवना-
मदातुकामो भवती स तेषाम्।
दत्तं पि चो नश्यति क्षिप्रमेव
फलं हि पापस्य इमेवरूपम् ॥ १२५ ॥
यच्चापि ते तत्र लभन्ति औषधं K 96
सुयुक्तरूपं कुशलेहि दत्तम्।
तेनापि तेषां रुज भूयु वर्धते
सो व्याधिरन्तं न कदाचि गच्छति ॥ १२६ ॥
अन्येहि चौर्याणि कृतानि भोन्ति
डमराथ डिम्बास्तथ विग्रहाश्च।
द्रव्यापहाराश्च कृतास्तथान्यै-
र्निपतन्ति तस्योपरि पापकर्मणः ॥ १२७ ॥
न जातु सो पश्यति लोकनाथं
नरेन्द्रराजं महि शासमानम्।

तस्याक्षणेष्वेव हि वासु भोति
इमां क्षिपित्वा मम बुद्धनेत्रीम् ॥ १२८ ॥
न चापि सो धर्म शृणोति बालो
बधिरश्च सो भोति अचेतनश्च ।
क्षिपित्व बोधीमिममेवरूपा-
मुपशान्ति तस्यो न कदाचि भोति ॥ १२९ ॥
सहस्र नेका नयुतांश्च भूयः
कल्पान कोट्यो यथ गङ्गवालिकाः ।
जडात्मभावो विकलश्च भोति
क्षिपित्व सूत्रं इमु पापकं फलम् ॥ १३० ॥
उद्यानभूमी नरकोऽस्य भोति
निवेशनं तस्य अपायभूमिः ।
खरसूकरा क्रोष्टुक भूमिसूचकाः
प्रतिष्ठितस्येह भवन्ति नित्यम् ॥ १३१ ॥
मनुष्यभावत्वमुपेत्य चापि
W 92 अन्धत्व बधिरत्व जडत्वमेति ।
परप्रेष्य सो भोति दरिद्र नित्यं
तत्कालि तस्याभरणानिमानि ॥ १३२ ॥
वस्त्राणि चो व्याधयु[१] भोन्ति तस्य
व्रणान कोटीनयुताश्च काये ।
विचर्चिका कण्डु तथैव पामा
कुष्ठं किलासं तथ आमगन्धः ॥ १३३ ॥
K 97 सत्कायदृष्टिश्च घनास्य भोति
उदीर्यते क्रोधबलं च तस्य ।
संरागु तस्यातिभृशं च भोति
तिर्याण योनीषु च सो सदा रमी ॥ १३४ ॥
N 71 सचेदहं शारिसुताद्य तस्य
परिपूर्णकल्पं प्रवदेय दोषान् ।
यो ही ममा[२] एतु क्षिपेत[३] सूत्रं
पर्यन्तु दोषाण न शक्य गन्तुम् ॥ १३५ ॥

---

१ K व्याधय. २ K मया. ३ K क्षिपेय.

संपश्यमानो इदमेव चार्थं
त्वां संदिशामी अहु शारिपुत्र।
मा हैव त्वं बालजनस्य अग्रतो
भाषिष्यसे सूत्रमिमेवरूपम्॥ १३६॥
ये तू इह व्यक्त बहुश्रुताश्च
स्मृतिमन्त[1] ये पण्डित ज्ञानवन्तः।
ये प्रस्थिता उत्तममग्रबोधिं
तान् श्रावयेस्त्वं परमार्थमेतत्॥ १३७॥ W 93
दृष्टाश्च येही बहुबुद्धकोटयः
कुशलं च यै रोपितमप्रमेयम्।
अध्याशयश्चा दृढ येष चो स्या-
त्तान् श्रावयेस्त्वं परमार्थमेतत्॥ १३८॥
ये वीर्यवन्तः सद मैत्रचित्ता
भावेन्ति मैत्रीमिह दीर्घरात्रम्।
उत्सृष्टकाया तथ जीविते च
तेषामिदं सूत्र भणेः समक्षम्॥ १३९॥
अन्योन्यसंकल्प सगौरवाश्च
तेषां[2] च बालेहि न संस्तवोऽस्ति।
ये चापि तुष्टा गिरिकन्दरेषु
तान् श्रावयेस्त्वं इद सूत्र भद्रकम्॥ १४०॥
कल्याणमित्रांश्च निषेवमाणाः K 98
पापांश्च मित्रान् परिवर्जयन्तः।
यानीदृशान् पश्यसि बुद्धपुत्रां-
स्तेषामिदं सूत्र प्रकाशयेसि॥ १४१॥
अच्छिद्रशीला मणिरत्नसादृशा
वैपुल्यसूत्राण परिग्रहे स्थिताः।
पश्येसि यानीदृश बुद्धपुत्रां-
स्तेषाग्रतः सूत्रमिदं वदेसि॥ १४२॥
अक्रोधना ये सद आर्जवाश्च
कृपासमन्वागत सर्वप्राणिषु।

---

१ N W स्मृतिमन्तु. २ K येषां.

सगौरवा ये सुगतस्य अन्तिके
तेषाग्रतः सूत्रमिदं वदेसि ॥ १४३ ॥
यो धर्मु भाषे परिषाय मध्ये
असङ्गप्राप्तो वदि युक्तमानसः ।
दृष्टान्तकोटीनयुतैरनेकै-
स्तस्येद सूत्रं उपदर्शयेसि ॥ १४४ ॥
मूर्ध्नाञ्जलिं यश्च करोति बद्ध्वा
सर्वज्ञभावं परिमार्गमाणः ।
W 94 दशो[1] दिशो योऽपि च चंक्रमेत
सुभाषितं भिक्षु गवेषमाणः ॥ १४५ ॥
वैपुल्यसूत्राणि च धारयेत
न चास्य रुच्यन्ति कदाचिदन्ये ।
एकां पि गाथां न च धारयेऽन्यत-
स्तं[2] श्रावयेस्त्वं वरसूत्रमेतत् ॥ १४६ ॥
N 72 K 99 तथागतस्यो यथ धातु धारये-
त्तथैव यो मार्गति कोचि तं नरः ।
एमेव यो मार्गति सूत्रमीदृशं
लभित्व चो मूर्धनि धारयेत ॥ १४७ ॥
अन्येषु सूत्रेषु न काचि[3] चिन्ता
लोकायतैरन्यतरैश्च शास्त्रैः ।
बालान एतादृश भोन्ति गोचरा-
स्तांस्त्वं विवर्जित्व प्रकाशयेरिदम् ॥ १४८ ॥
पूर्णं पि कल्पं अह्न शारिपुत्र
वदेयमाकार सहस्रकोट्यः ।
ये प्रस्थिता उत्तममग्रबोधिं
तेषाग्रतः सूत्रमिदं वदेसि ॥ १४९ ॥

इत्यार्यसद्धर्मपुण्डरीके धर्मपर्याये औपम्यपरिवर्तो नाम तृतीयः ॥

---

१ K दिशो दश. २ K संश्रावयेस्त्वं for तं श्राव°. ३ K कदापि for काचि.

## ४ अधिमुक्तिपरिवर्तः ।

अथ खल्वायुष्मान् सुभूतिरायुष्मांश्च महाकात्यायनः आयुष्मांश्च महाकाश्यपः आयु- N 73
ष्मांश्च महामौद्गल्यायनः इममेवंरूपमश्रुतपूर्वं धर्मं श्रुत्वा भगवतोऽन्तिकात् संमुखमायुष्मतश्च K 100 W 95
शारिपुत्रस्य व्याकरणं श्रुत्वा अनुत्तरायां सम्यक्संबोधौ आश्चर्यप्राप्ता अद्भुतप्राप्ता औद्बिल्यप्राप्ता-
स्तस्यां वेलायामुत्थायासनेभ्यो येन भगवांस्तेनोपसंक्रामन्[1] । उपसंक्रम्य एकांसमुत्तरासङ्गं कृत्वा
दक्षिणं जानुं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य[2] भगवन्तमभिमुखमुल्लोकय-
माना अवनकाया अभिनतकायाः प्रणतकायास्तस्यां वेलायां भगवन्तमेतदवोचन्[3]—वयं हि भग-
वन् जीर्णा वृद्धा महल्लका अस्मिन् भिक्षुसंघे स्थविरसंमता जराजीर्णीभूता निर्वाणप्राप्ताः
स्म इति भगवन् निरुद्यमा अनुत्तरायां सम्यक्संबोधावप्रतिबलाः स्मः, अप्रतिवीर्यारम्भाः स्मः ।
यदापि भगवान् धर्मं देशयति[4], चिरं निषण्णश्च भगवान् भवति, वयं च तस्यां धर्मदेशनायां
प्रत्युपस्थिता भवामः, तदाप्यस्माकं भगवन् चिरं निषण्णानां भगवन्तं चिरं पर्युपासितानामङ्ग-
प्रत्यङ्गानि दुःखन्ति, संधिविसंधयश्च दुःखन्ति । ततो वयं भगवन् भगवतो धर्मं देशयमानस्य K 101
शून्यतानिमित्ताप्रणिहितं सर्वमाविष्कुर्मः । नास्माभिरेषु बुद्धधर्मेषु बुद्धक्षेत्रव्यूहेषु वा बोधि-
सत्त्वविक्रीडितेषु वा तथागतविक्रीडितेषु वा स्पृहोत्पादिता । तत्कस्य हेतोः? यच्चास्मा- W 96
द्भगवंस्त्रैधातुकान्निर्धाविता निर्वाणसंज्ञिनः, वयं च जराजीर्णाः । ततो भगवन् अस्माभिरप्यन्ये
बोधिसत्त्वा अववदिता अभूवन्ननुत्तरायां सम्यक्संबोधौ, अनुशिष्टाश्च । न च भगवंस्तत्रास्माभि-
रेकमपि स्पृहाचित्तमुत्पादितमभूत् । ते वयं भगवन्नेतर्हि भगवतोऽन्तिकाच्छ्रावकाणामपि N 74
व्याकरणमनुत्तरायां सम्यक्संबोधौ भवतीति श्रुत्वा आश्चर्याद्भुतप्राप्ता महालाभप्राप्ताः स्मः ।
भगवन्नद्य सहसैवेममेवंरूपमश्रुतपूर्वं तथागतघोषं श्रुत्वा महारत्नप्रतिलब्धाश्च स्मः । भगवन्
अप्रमेयरत्नप्रतिलब्धाश्च स्मः । भगवन् अमार्गितमपर्येष्टम्[5]अचिन्तितमप्रार्थितं चास्माभिर्भगवन्निदमेवं
रूपं महारत्नं प्रतिलब्धम् । प्रतिभाति नो भगवन्, प्रतिभाति नः सुगत । तद्यथापि नाम
भगवन् कश्चिदेव पुरुषः पितुरन्तिकादपक्रामेत् । सोऽपक्रम्य अन्यतरं जनपदप्रदेशं गच्छेत् ।
स तत्र बहूनि वर्षाणि विप्रवसेद् विंशतिं वा त्रिंशद्वा चत्वारिंशद्वा पञ्चाशद्वा । अथ स भगवन्
महान् पुरुषो भवेत् । स च दरिद्रः स्यात् । स च वृत्तिं पर्येषमाण आहारचीवरहेतोर्दिशो[6] विदिशः K 102
प्रक्रामन् अन्यतरं जनपदप्रदेशं गच्छेत् । तस्य च स पिता अन्यतमं जनपदं प्रक्रान्तः स्यात् ।
बहुधनधान्यहिरण्यकोशकोष्ठागारश्च भवेत् । बहुसुवर्णरूप्यमणिमुक्तावैडूर्यशङ्खशिलाप्रवाल-
जातरूपरजतसमन्वागतश्च भवेत् । बहुदासीदासकर्मकरपौरुषेयश्च भवेत् । बहुहस्त्यश्वरथ-
गवेडकसमन्वागतश्च भवेत् । महापरिवारश्च भवेत् । महाजनपदेषु च धनिकः स्यात् । आयोग-
प्रयोगकृषिवणिज्यप्रभूतश्च भवेत् ॥

---

१ W om. उपसंक्रामन्. २ K प्रणामयित्वा. ३ W अवोचत्. ४ W देशयेत्. ५ K अपर्येष्टिम्. ६ K दश दिशः for दिशो विदिशः.

अथ खलु भगवन् स दरिद्रपुरुष आहारचीवरपर्येष्टिहेतोर्ग्रामनगरनिगमजनपद-
N 75 राष्ट्रराजधानीषु पर्यटमानोऽनुपूर्वेण यत्रासौ पुरुषो बहुधनहिरण्यसुवर्णकोशकोष्ठागारस्तस्यैव
पिता वसति, तन्नगरमनुप्राप्तो भवेत्। अथ खलु भगवन् स दरिद्रपुरुषस्य पिता बहुधन-
हिरण्यकोशकोष्ठागारस्तस्मिन् नगरे वसमानस्तं पञ्चाशद्वर्षनष्टं पुत्रं सततसमितमनुस्मरेत्।
समनुस्मरमाणश्च न कस्यचिदाचक्षेदन्यत्रैक एवात्मनाध्यात्मं संतप्येत्, एवं च चिन्तयेत्—
अहमस्मि जीर्णो वृद्धो महल्लकः। प्रभूतं मे हिरण्यसुवर्णधनधान्यकोशकोष्ठागारं संविद्यते।
न च मे पुत्रः कश्चिदस्ति। मा हैव मम कालक्रिया भवेत्। सर्वमिदमपरिभुक्तं विनश्येत्।
स तं पुनः पुनः पुत्रमनुस्मरेत्—अहो नामाहं निर्वृतिप्राप्तो भवेयं यदि मे स पुत्र इमं
धनस्कन्धं परिभुञ्जीत॥

अथ खलु भगवन् स दरिद्रपुरुष आहारचीवरं पर्येषमाणोऽनुपूर्वेण येन तस्य प्रभूत-
K 103 W 97 हिरण्यसुवर्णधनधान्यकोशकोष्ठागारस्य समृद्धस्य पुरुषस्य निवेशनं तेनोपसंक्रामेत्। अथ
खलु भगवन् स तस्य दरिद्रपुरुषस्य पिता स्वके निवेशनद्वारे महत्या ब्राह्मणक्षत्रियविट्शूद्र-
परिषदा परिवृतः पुरस्कृतो महासिंहासने सपादपीठे सुवर्णरूप्यप्रतिमण्डिते उपविष्टो हिरण्य-
कोटीशतसहस्रैर्व्यवहारं कुर्वन् वालव्यजनेन वीज्यमानो विततविताने पृथिवीप्रदेशे मुक्त-
कुसुमाभिकीर्णे रत्नदामाभिप्रलम्बिते महत्यर्द्ध्या उपविष्टः स्यात्। अद्राक्षीत् स भगवन्
दरिद्रपुरुषस्तं स्वकं पितरं स्वके निवेशनद्वारे एवंरूपया ऋध्या उपविष्टं महता जनकायेन
परिवृतं गृहपतिकृत्यं कुर्वाणम्। दृष्ट्वा च पुनर्भीतस्त्रस्तः संविग्नः संहृष्टरोमकूपजातः उद्विग्न-
N 76 मानसः एवमनुविचिन्तयामास—सहसैवायं मया राजा वा राजमात्रो वा आसादितः।
नास्त्यस्माकमिह किंचित् कर्म। गच्छामो वयं येन दरिद्रवीथी, तत्रास्माकमाहारचीवर-
मल्पकृच्छ्रेणैव उत्पत्स्यते। अलं मे चिरं विलम्बितेन। मा हैवाहमिह वैष्टिको वा गृह्येय,
अन्यतरं वा दोषमनुप्राप्नुयाम्॥

अथ खलु भगवन् स दरिद्रपुरुषो दुःखपरंपरामनसिकारभयभीतस्त्वरमाणः प्रक्रामेत्
W 98 पलायेत्, न तत्र संतिष्ठेत्। अथ खलु भगवन् स आढ्यः पुरुषः स्वके निवेशनद्वारे
सिंहासने उपविष्टस्तं स्वकं पुत्रं सहदर्शनेनैव प्रत्यभिजानीयात्। दृष्ट्वा च पुनस्तुष्ट उदग्र
आत्तमनस्कः प्रमुदितः प्रीतिसौमनस्यजातो भवेत्, एवं च चिन्तयेत्—आश्चर्यं यावद् यत्र हि
नाम अस्य महतो हिरण्यसुवर्णधनधान्यकोशकोष्ठागारस्य परिभोक्ता उपलब्धः। अहं चैतमेव
पुनः पुनः समनुस्मरामि। अयं च स्वयमेवेहागतः। अहं च जीर्णो वृद्धो महल्लकः॥

K 104 अथ खलु भगवन् स पुरुषः पुत्रतृष्णासंपीडितस्तस्मिन् क्षणलवमुहूर्ते जवनान्
पुरुषान् संप्रेषयेत्—गच्छत मार्षा एतं पुरुषं शीघ्रमानयध्वम्। अथ खलु भगवंस्ते पुरुषाः
सर्व एव जवेन प्रधाविंता[1]स्तं दरिद्रपुरुषमध्यालम्बेयुः। अथ खलु दरिद्रपुरुषस्तस्यां वेलायां
भीतस्त्रस्तः संविग्नः संहृष्टरोमकूपजातः उद्विग्नमानसो दारुणमार्तस्वरं मुञ्चेदारवेद् विरवेत्।
नाहं युष्माकं किंचिदपरो[2]ध्यामीति वाचं भाषेत। अथ खलु ते पुरुषा बलात्कारेण तं

१ W प्रधावित्वा, २ K अपराद्धम्.

दरिद्रपुरुषं विरवन्तमप्याकर्षेयुः । अथ खलु स दरिद्रपुरुषो भीतस्त्रस्तः संविग्न उद्विग्नमानस
एवं च चिन्तयेत्—मा तावदहं वध्यो दण्ड्यो भवेयम् । नश्यामीति । स मूर्छितो धरण्यां N 77
प्रपतेत्, विसंज्ञश्च स्यात् । आसन्ने चास्य स पिता भवेत् । स तान् पुरुषानेवं वदेत्—मा
भवन्त एतं पुरुषमानयन्त्विति । तमेनं शीतलेन वारिणा परिसिञ्चित्वा न भूय आलपेत् । K 105
तत्कस्य हेतोः? जानाति स गृहपतिस्तस्य दरिद्रपुरुषस्य हीनाधिमुक्तिकतामात्मनश्चोदार-
स्थामताम् । जानीते च ममैष पुत्र इति ॥

अथ खलु भगवन् स गृहपतिरुपायकौशल्येन न कस्यचिदाचक्षेत्—ममैष पुत्र इति । W 99
अथ खलु भगवन् स गृहपतिरन्यतरं पुरुषमामन्त्रयेत्—गच्छ त्वं भोः पुरुष । एनं दरिद्र-
पुरुषमेवं वदस्व—गच्छ त्वं भोः पुरुष येनाकाङ्क्षसि । मुक्तोऽसि । एवं वदति स पुरुषस्तस्मै
प्रतिश्रुत्य येन स दरिद्रपुरुषस्तेनोपसंक्रामेत् । उपसंक्रम्य तं दरिद्रपुरुषमेवं वदेत्—गच्छ त्वं
भोः पुरुष येनाकाङ्क्षसि । मुक्तोऽसीति । अथ खलु स दरिद्रपुरुष इदं वचनं श्रुत्वा आश्चर्या-
द्भुतप्राप्तो भवेत् । स उत्थाय तस्मात् पृथिवीप्रदेशाद्येन दरिद्रवीथी तेनोपसंक्रामेदाहारचीवर-
पर्येष्टिहेतोः । अथ खलु स गृहपतिस्तस्य दरिद्रपुरुषस्याकर्षणहेतोरुपायकौशल्यं प्रयोजयेत् ।
स तत्र द्वौ पुरुषौ प्रयोजयेत् दुर्वर्णावल्पौजस्कौ—गच्छतां भवन्तौ योऽसौ पुरुष इहागतो-
ऽभूत्, तं युवां द्विगुणया दिवसमुद्रया आत्मवचनेनैव भरयित्वेह मम निवेशने कर्म कारा-
पयेथाम् । सचेत् स एवं वदेत्—किं कर्म कर्तव्यमिति, स युवाभ्यामेवं वक्तव्यः—संकारधानं
शोधयितव्यं सहावाभ्यामिति । अथ तौ पुरुषौ तं दरिद्रपुरुषं पर्येषयित्वा तया क्रियया N 78
संपादयेताम् । अथ खलु तौ द्वौ पुरुषौ स च दरिद्रपुरुषो वेतनं गृहीत्वा तस्य महाधनस्य
पुरुषस्यान्तिकात्तस्मिन्नेव निवेशने संकारधानं शोधयेयुः । तस्यैव च महाधनस्य पुरुषस्य K 106
गृहपरिसरे कटपलिकुञ्चिकायां वासं कल्पयेयुः । स चाढ्यः पुरुषो गवाक्षवातायनेन तं
स्वकं पुत्रं पश्येत् संकारधानं शोधयमानम् । दृष्ट्वा च पुनराश्चर्यप्राप्तो भवेत् ॥

अथ खलु स गृहपतिः स्वकान्निवेशनादवतीर्य अपनयित्वा माल्याभरणानि, अप-
नयित्वा मृदुकानि वस्त्राणि, चौक्षाण्युदाराणि मलिनानि वस्त्राणि प्रावृत्य, दक्षिणेन पाणिना
पिटकं परिगृह्य पांसुना स्वगात्रं दूषयित्वा दूरत एव संभाषमाणो येन स दरिद्रपुरुषस्तेनोप- W 100
संक्रामेत् । उपसंक्रम्यैवं वदेत्—वहन्तु भवन्तः पिटकानि, मा तिष्ठत, हरत पांसूनि ।
अनेनोपायेन तं पुत्रमालपेत् संलपेच्च । एवं वदेत्—इहैव त्वं भोः पुरुष कर्म कुरुष्व । मा
भूयोऽन्यत्र गमिष्यसि । सविशेषं तेऽहं वेतनकं दास्यामि । येन येन च ते कार्यं भवेत्,
तद्विश्रब्धं मां याचेः, यदि वा कुण्डमूल्येन यदि वा कुण्डिकामूल्येन यदि वा स्थालिका-
मूल्येन यदि वा काष्ठमूल्येन यदि वा लवणमूल्येन यदि वा भोजनेन यदि वा प्रावरणेन ।
अस्ति मे भोः पुरुष जीर्णशाटी । सचेत्तया ते कार्यं स्यात्, याचेः, अहं तेऽनुप्रदास्यामि ।
येन येन ते भोः पुरुष कार्यमेवंरूपेण परिष्कारेण, तं तमेवाहं ते सर्वमनुप्रदास्यामि । N 79
निर्वृतस्त्वं भोः पुरुष भव । यादृशस्ते पिता, तादृशस्तेऽहं मन्तव्यः । तत्कस्य हेतोः? अहं

च वृद्धः, त्वं च दहरः । मम च त्वया बहु कर्म कृतमिमं संकारधानं शोधयता । न च
K 107 त्वया भोः पुरुष अत्र कर्म कुर्वता शाठ्यं वा वक्रता वा कौटिल्यं वा मानो वा म्रक्षो वा
कृतपूर्वः, करोषि वा । सर्वथा ते भोः पुरुष न समनुपश्याम्येकमपि पापकर्म, यथैषामन्येषां
पुरुषाणां कर्म कुर्वतामिमे दोषाः संविद्यन्ते । यादृशो मे पुत्र औरसः, तादृशस्त्वं मम
अद्याग्रेण भवसि ॥

अथ खलु भगवन् स गृहपतिस्तस्य दरिद्रपुरुषस्य[1] पुत्र इति नाम कुर्यात् । स च दरिद्रपुरुषस्तस्य गृहपतेरन्तिके पितृसंज्ञामुत्पादयेत् । अनेन भगवन् पर्यायेण स गृहपतिः पुत्रकामतृषितो विंशतिवर्षाणि तं पुत्रं संकारधानं शोधापयेत् । अथ विंशतेर्वर्षाणामत्ययेन स दरिद्रपुरुषस्तस्य गृहपतेर्निवेशने विश्रब्धो भवेन्निष्क्रमणप्रवेशे, तत्रैव च कटपलिकुञ्चिकायां वासं कल्पयेत् ॥

अथ खलु भगवंस्तस्य गृहपतेर्ग्लान्यं प्रत्युपस्थितं भवेत् । स मरणकालसमयं च
आत्मनः प्रत्युपस्थितं समनुपश्येत् । स तं दरिद्रपुरुषमेवं वदेत्—आगच्छ त्वं भोः पुरुष ।
N 80 W 101 इदं मम प्रभूतं हिरण्यसुवर्णधनधान्यकोशकोष्ठागारमस्ति । अहं बाढग्लानः । इच्छाम्येतं
यस्य दातव्यं यतश्च ग्रहीतव्यं यच्च निधातव्यं भवेत्, सर्वं संजानीयाः । तत्कस्य
हेतोः ? यादृश एव अहमस्य द्रव्यस्य स्वामी, तादृशस्त्वमपि । मा च मे त्वं किंचिदतो
विप्रणाशयिष्यसि ॥

K 108 अथ खलु भगवन् स दरिद्रपुरुषोऽनेन पर्यायेण तच्च तस्य गृहपतेः प्रभूतं हिरण्यसुवर्णधनधान्यकोशकोष्ठागारं संजानीयात् । आत्मना च ततो निःस्पृहो भवेत् । न च तस्मात् किंचित् प्रार्थयेत्, अन्तशः सक्तुप्रस्थमूल्यमात्रमपि । तत्रैव च कटपलिकुञ्चिकायां वासं कल्पयेत्, तामेव दरिद्रचिन्तामनुविचिन्तयमानः ॥

अथ खलु भगवन् स गृहपतिस्तं पुत्रं शक्तं परिपालकं परिपक्वं विदित्वा अवमर्दितचित्तमुदारसंज्ञया च पौर्विकया दरिद्रचिन्तया आर्तीयन्तं जेह्रीयमाणं जुगुप्समानं विदित्वा मरणकालसमये प्रत्युपस्थिते तं दरिद्रपुरुषमानाय्य महतो ज्ञातिसंघस्योपनामयित्वा राज्ञो वा राजमात्रस्य वा पुरतो नैगमजानपदानां च संमुखमेवं संश्रावयेत्—शृण्वन्तु भवन्तः, अयं मम पुत्र औरसो मयैव जनितः । अमुकं नाम नगरम् । तस्मादेष पञ्चाशद्वर्षो नष्टः । अमुको नामैष नाम्ना । अहमप्यमुको नाम । ततश्चाहं नगरादेतमेव मार्गमाण इहागतः । एष मम पुत्रः, अहमस्य पिता । यः कश्चिन्ममोपभोगोऽस्ति, तं सर्वमस्मै पुरुषाय निर्यातयामि । यच्च मे किंचिदस्ति प्रत्यात्मकं धनम्, तत्सर्वमेष एव जानाति ॥

अथ खलु भगवन् स दरिद्रपुरुषस्तस्मिन् समये इममेवंरूपं घोषं श्रुत्वा आश्चर्याद्भुतप्राप्तो भवेत् । एवं च विचिन्तयेत्—सहसैव मयेदमेव तावद् हिरण्यसुवर्णधनधान्यकोशकोष्ठागारं प्रतिलब्धमिति ॥

---

१ W दरिद्रपुरुषस्तस्य पुत्र.

एवमेव भगवन् वयं तथागतस्य पुत्रप्रतिरूपकाः । तथागतश्च अस्माकमेवं वदति—
पुत्रा मम यूयमिति, यथा स गृहपतिः । वयं च भगवंस्तिसृभिर्दुःखताभिः संपीडिता
अभूम । कतमाभिस्तिसृभिः ? यदुत दुःखदुःखतया संस्कारदुःखतया विपरिणामदुःखतया W 102
च । संसारे च हीनाधिमुक्तिकाः । ततो वयं भगवता बहून् धर्मान् प्रत्यवरान् संकारधान- K 109
सदृशाननुविचिन्तयिताः । तेषु चास्म प्रयुक्ता घटमाना व्यायच्छमानाः । निर्वाणमात्रं च
वयं भगवन् दिवसमुद्रामिव पर्येषमाणा मार्गामः । तेन च वयं भगवन् निर्वाणेन प्रतिलब्धेन
तुष्टा भवामः । बहु च लब्धमिति मन्यामहे तथागतस्यान्तिकात् एषु धर्मेष्वभियुक्ता
घटित्वा व्यायमित्वा । प्रजानाति च तथागतोऽस्माकं हीनाधिमुक्तिकताम्, ततश्च
भगवानस्मानुपेक्षते, न संभिनत्ति, नाचष्टे—योऽयं तथागतस्य ज्ञानकोशः, एष एव युष्माकं
भविष्यतीति । भगवांश्चास्माकमुपायकौशल्येन अस्मिंस्तथागतज्ञानकोशे दायादान् संस्थाप- N 81
यति । निःस्पृहाश्च वयं भगवन् । तत एवं जानीम—एतदेवास्माकं बहुकरं यद्वयं तथागत-
स्यान्तिकाद्दिवसमुद्रामिव निर्वाणं प्रतिलभामहे । ते वयं भगवन् बोधिसत्त्वानां महा-
सत्त्वानां तथागतज्ञानदर्शनमारभ्य उदारां धर्मदेशनां कुर्मः । तथागतज्ञानं विवरामो K 110
दर्शयाम उपदर्शयामः । वयं भगवंस्ततो निःस्पृहाः समानाः । तत्कस्य हेतोः ? उपाय-
कौशल्येन तथागतोऽस्माकमधिमुक्तिं प्रजानाति । तच्च वयं न जानीमो न बुध्यामहे यदिदं
भगवता एतर्हि कथितम्—यथा वयं भगवतो भूताः पुत्राः, भगवांश्चास्माकं स्मारयति
तथागतज्ञानदायादान् । तत्कस्य हेतोः ? यथापि नाम वयं तथागतस्य भूताः पुत्राः इति[1],
अपि तु खलु पुनर्हीनाधिमुक्ताः । सचेद् भगवानस्माकं पश्येदधिमुक्तिबलम्, बोधिसत्त्व-
शब्दं भगवानस्माकमुदाहरेत् । वयं पुनर्भगवता द्वे कार्ये कारापिताः—बोधिसत्त्वानां चाग्रतो
हीनाधिमुक्तिका इत्युक्ताः, ते चोदारायां बुद्धबोधौ समादापिताः । अस्माकं चेदानीं
भगवानधिमुक्तिबलं ज्ञात्वा इदमुदाहृतवान् । अनेन वयं भगवन् पर्यायेणैवं वदामः—
सहसैवास्माभिर्निःस्पृहैराकाङ्क्षितममार्गितमपर्येषितमचिन्तितमप्रार्थितं सर्वज्ञतारत्नं प्रतिलब्धं
यथापीदं तथागतस्य पुत्रैः ॥

अथ खल्वायुष्मान् महाकाश्यपस्तस्यां वेलायामिमा गाथा अभाषत— W 103

आश्चर्यभूताः स्म तथाद्भुताश्च
औद्बिल्यप्राप्ताः स्म श्रुणित्व घोषम् ।
सहसैव अस्माभिरयं तथाद्य
मनोज्ञघोषः श्रुतु नायकस्य ॥ १ ॥

विशिष्टरत्नान महन्तराशि-
र्मुहूर्तमात्रेणयमद्य लब्धः ।

---

1 W om. इति.

न चिन्तितो नापि कदाचि प्रार्थित-
स्तं श्रुत्व आश्चर्यगताः स्म सर्वे ॥ २ ॥

यथापि बालः पुरुषो भवेत
K 111 उत्प्लावितो बालजनेन सन्तः ।
पितुः सकाशातु अपक्रमेत
अन्यं च देशं व्रजि सो सुदूरम् ॥ ३ ॥

N 82 पिता च तं शोचति तस्मि काले
पलायितं ज्ञात्व स्वकं हि पुत्रम् ।
शोचन्तु सो दिग्विदिशासु अञ्चे[१]
वर्षाणि पञ्चाशदनूनकानि ॥ ४ ॥

तथा च सो पुत्र गवेषमाणो
अन्यं महन्तं नगरं हि गत्वा ।
निवेशनं मापिय तत्र तिष्ठेत्
समर्पितो कामुगणेहि पञ्चभिः ॥ ५ ॥

W 104 बहुं हिरण्यं च सुवर्णरूप्यं
धान्यं धनं शङ्खशिलाप्रवालम् ।
हस्ती च अश्वाश्च पदातयश्च
गावः पशूश्चैव तथैडकाश्च ॥ ६ ॥

प्रयोग आयोग तथैव क्षेत्रा
दासी च दासा बहु प्रेष्यवर्गः ।
सुसत्कृतः प्राणिसहस्रकोटिभी
राज्ञश्च सो वल्लभु नित्यकालम् ॥ ७ ॥

कृताञ्जली तस्य भवन्ति नागरा
ग्रामेषु ये चापि वसन्ति ग्रामिणः ।
बहुवाणिजास्तस्य व्रजन्ति अन्तिके
बहूहि कार्येहि कृताधिकाराः ॥ ८ ॥

एतादृशो ऋद्धिमतो नरः स्या-
ज्जीर्णश्च वृद्धश्च महल्लकश्च ।
स पुत्रशोकं अनुचिन्तयन्तः
क्षपेय रात्रिंदिव नित्यकालम् ॥ ९ ॥

---

१ K हं चे.

स तादृशो दुर्मति मह्य पुत्रः
पञ्चाश वर्षाणि[1] तदा पलानकः[2] ।
अयं च कोशो विपुलो ममास्ति
कालक्रिया चो मम प्रत्युपस्थिता ॥ १० ॥
सो चापि बालो तद तस्य पुत्रो N 83
दरिद्रकः कृपणकु नित्यकालम् ।
ग्रामेण ग्रामं अनुचंक्रमन्तः
पर्येषते भक्त अथापि चोलम् ॥ ११ ॥
पर्येषमाणोऽपि कदाचि किंचि-
ल्लभेत किंचित् पुन नैव किंचित् ।
स शुष्यते परशरणेषु बालो W 105
दद्रूय कण्डूय च[3] दिग्धगात्रः ॥ १२ ॥
सो च व्रजेत्तं नगरं यहिं पिता
अनुपूर्वशो तत्र गतो भवेत ।
भक्तं च चोलं च गवेषमाणो
निवेशनं यत्र पितुः स्वकस्य ॥ १३ ॥
सो[4] चापि आढ्यः पुरुषो महाधनो
द्वारस्मि सिंहासनि संनिषण्णः ।
परिवारितः प्राणिशतैरनेकै-
र्वितान तस्या[5] विततोऽन्तरीक्षे ॥ १४ ॥
आप्तो जनश्चास्य समन्ततः स्थितो
धनं हिरण्यं च गणेन्ति केचित् ।
केचित्तु लेखानपि लेखयन्ति
केचित् प्रयोगं च प्रयोजयन्ति ॥ १५ ॥
सो चा दरिद्रो तहि एतु दृष्ट्वा K 113
विभूषितं गृहपतिनो निवेशनम् ।
कहिं नु अद्य अहमत्र आगतो
राजा अयं भेष्यति राजमात्रः ॥ १६ ॥
मा दानि दोषं पि लभेयमत्र
गृह्णित्व वेष्टिं पि च कारयेयम् ।

१ K W वर्षापि. २ K पलायकः. ३ K विदिग्धगात्रः for च दिग्ध°. ४ K स चापि. ५ K तस्य.

अनुचिन्तयन्तः स पलायते नरो
दरिद्रवीथीं परिपृच्छमानः ॥ १७ ॥
N 84 सो चा धनी तं खकु पुत्र दृष्ट्वा
सिंहासनस्थश्च भवेत् प्रहृष्टः।
स दूतकान् प्रेषयि तस्य अन्तिके
आनेथ एतं पुरुषं दरिद्रम् ॥ १८ ॥
W 106 समनन्तरं तेहि गृहीतु सो नरो
गृहीतमात्रो[1]ऽथ च मूर्च्छ गच्छेत्।
ध्रुवं खु मह्यं वधका उपस्थिताः
किं मह्य[2] चोलेनथ भोजनेनं वा ॥ १९ ॥
दृष्ट्वा च सो पण्डितु तं महाधनी
हीनाधिमुक्तो अयु बाल दुर्मतिः।
न श्रद्दधी मह्यमिमां विभूषितां[3]
पिता ममायं ति न चापि श्रद्दधीत् ॥ २० ॥
पुरुषांश्च सो तत्र प्रयोजयेत
वङ्काश्च ये काणक कुण्ठकाश्च।
कुचेलकाः कृष्णक हीनसत्त्वाः
पर्येषथा तं नरु कर्मकारकम् ॥ २१ ॥
संकारधानं इमु मह्य पूतिक-
मुच्चारप्रस्रावविनाशितं च।
तं शोधनार्थाय करोहि कर्म
द्विगुणं च ते वेतनकं प्रदास्ये ॥ २२ ॥
K 114 एतादृशं घोष श्रुणित्व सो नरो
आगत्य संशोधयि तं प्रदेशम्।
तत्रैव सो आवसथं च कुर्या-
न्निवेशनस्योपलि[4]कुञ्चिकेऽस्मिन् ॥ २३ ॥
सो चा धनी तं पुरुषं निरीक्षेद्
गवाक्षओलोकनकेऽपि[5] नित्यम्।
W 107 हीनाधिमुक्तो अयु मह्य पुत्रः
संकारधानं शुचिकं करोति ॥ २४ ॥

---

१ K °मात्रो अथ for °मात्रोऽथ च. २ K किमद्य. ३ W विभूतां (तिं?) for विभूषितां. ४ N W °परिकुञ्चिके°. ५ K ओलोकनकेहि.

स ओतरित्वा पिटकं गृहीत्वा N 85
मलिनानि वस्त्राणि च प्रावरित्वा ।
उपसंक्रमेत्तस्य नरस्य अन्तिके
अवभर्त्सयन्तो न करोथ कर्म ॥ २५ ॥
द्विगुणं च ते वेतनकं ददामि
द्विगुणां च भूयस्तथ पादम्रक्षणम् ।
सलोणभक्तं च ददामि तुभ्य
शाकं च शाटिं च पुनर्ददामि ॥ २६ ॥
एवं च तं भर्त्सिय[1] तस्मि काले
संश्लेषयेत्तं पुनरेव पण्डितः ।
सुष्ठु खलु कर्म करोषि अत्र
पुत्रोऽसि व्यक्तं मम नात्र संशयः ॥ २७ ॥
स स्तोकस्तोकं च गृहं प्रवेशयेत्
कर्मं च कारापयि तं मनुष्यम् ।
विंशच्च वर्षाणि सुपूरितानि
क्रमेण विश्रम्भयि तं नरं सः ॥ २८ ॥
हिरण्यु सो मौक्तिकु स्फाटिकं च
प्रतिसामयेत्तत्र निवेशनस्मिन् ।
सर्वं च सो संगणनां करोति
अर्थं च सर्वं अनुचिन्तयेत ॥ २९ ॥
बहिर्धा सो तस्य निवेशनस्य K 115
कुटिकाय एको वसमानु बालः ।
दरिद्रचिन्तामनुचिन्तयेत W 108
न मेऽस्ति एतादृश भोग केचित् ॥ ३० ॥
ज्ञात्वा च सो तस्य इमेवरूप-
मुदारसंज्ञाभिगतो मि पुत्रः ।
स आनयित्वा सुहृज्ञातिसंघं
निर्यातयिष्याम्यहु सर्वमर्थम् ॥ ३१ ॥
राजान सो नैगमनागरांश्च
समानयित्वा बहुवाणिजांश्च ।

[1] K भर्त्सयि.

उ[1]वाच एवं परिषाय मध्ये
पुत्रो ममायं चिर विप्रनष्टकः ॥ ३२ ॥
पञ्चाश वर्षाणि सुपूर्णकानि
अन्ये चऽतो विंशतिये मि दृष्टः ।
अमुकातु नगरातु ममैष नष्टो
अहं च मार्गन्त इहैवमागतः ॥ ३३ ॥
N 86 सर्वस्य द्रव्यस्य अयं प्रभुर्मे
एतस्य निर्यातयि [2]सर्वशेषतः ।
करोतु कार्यं च पितुर्धनेन
सर्वं कुटुम्बं च ददामि एतत् ॥ ३४ ॥
आश्चर्यप्राप्तश्च भवेन्नरोऽसौ
दरिद्रभावं पुरिमं स्मरित्वा ।
हीनाधिमुक्तिं च पितुश्च तान् गुणाँ-
ल्लब्ध्वा कुटुम्बं सुखितोऽस्मि अद्य ॥ ३५ ॥
K 116 तथैव चास्माक विनायकेन
हीनाधिमुक्तित्व विजानियान ।
न श्रावितं बुद्ध भविष्यथेति
यूयं किल श्रावक मह्य पुत्राः ॥ ३६ ॥
अस्मांश्च अध्येषति लोकनाथो
ये प्रस्थिता उत्तममग्रबोधिम् ।
तेषां वदे काश्यप मार्ग नुत्तरं
यं मार्ग भावित्व भवेयु बुद्धाः ॥ ३७ ॥
W 109 वयं च तेषां सुगतेन प्रेषिता
बहुबोधिसत्त्वान महाबलानाम् ।
अनुत्तरं मार्ग प्रदर्शयाम
दृष्टान्तहेतूनयुतान कोटिभिः ॥ ३८ ॥
श्रुत्वा च अस्माकु जिनस्य पुत्रा
बोधाय भावेन्ति सुमार्गमग्र्यम् ।
ते व्याक्रियन्ते च क्षणस्मि तस्मिन्
भविष्यथा बुद्ध इमस्मि लोके ॥ ३९ ॥

---

१ K एवमुवाच for उवाच एवं. २ W सर्वं अशेषतः.

एतादृशं कर्म करोम तायिनः
संरक्षमाणा इम धर्मकोशम् ।
प्रकाशयन्तश्च जिनात्मजानां
वैश्वासिकस्तस्य यथा नरः सः ॥ ४० ॥
दरिद्रचिन्ताश्च विचिन्तयाम
विश्राणयन्तो इमु बुद्ध[१]कोशम् ।
न चैव प्रार्थेम जिनस्य ज्ञानं
जिनस्य ज्ञानं च प्रकाशयामः ॥ ४१ ॥
प्रत्यात्मिकीं निर्वृति कल्पयाम K 117
एतावता ज्ञानमिदं न भूयः ।
नास्माक हर्षोऽपि कदाचि भोति
क्षेत्रेषु बुद्धान श्रुणित्व व्यूहान् ॥ ४२ ॥
शान्ताः किला सर्विमि धर्मनास्रवा W 110
निरोधउत्पादविवर्जिताश्च ।
न चात्र कश्चिद्भवतीह धर्मो
एवं तु चिन्तेत्व न भोति श्रद्धा ॥ ४३ ॥
सुनिःस्पृहा स्मा वय दीर्घरात्रं
बौद्धस्य ज्ञानस्य अनुत्तरस्य ।
प्रणिधानमस्माक न जातु तत्र
इयं परा निष्ठ जिनेन उक्ता ॥ ४४ ॥
निर्वाणपर्यन्ति समुच्छ्रयेऽस्मिन्
परिभाविता शून्यत दीर्घरात्रम् ।
परिमुक्त त्रैधातुकदुःखपीडिताः
कृतं च अस्माभि जिनस्य शासनम् ॥ ४५ ॥
यं हि प्रकाशेम जिनात्मजानां
ये प्रस्थिता भोन्ति इहाग्रबोधौ ।
तेषां च यत्किंचि वदाम धर्मं
स्पृह तत्र अस्माक न जातु भोति ॥ ४६ ॥
तं चास्म लोकाचरियः स्वयंभू- N 87
रुपेक्षते कालमवेक्षमाणः । K 118
न भाषते भूतपदार्थसंधिं
अधिमुक्तिमस्माकु गवेषमाणः ॥ ४७ ॥

१ W बुद्धघोषम्.

उपायकौशल्य यथैव तस्य
महाधनस्य पुरुषस्य काले।
हीनाधिमुक्तं सततं दमेति
दमियान चास्मै प्रददाति वित्तम्॥ ४८॥
सुदुष्करं कुर्वति लोकनाथो
W 111 उपायकौशल्य प्रकाशयन्तः।
हीनाधिमुक्तान् दमयन्तु पुत्रान्
दमेत्व च ज्ञानमिदं ददाति॥ ४९॥
आश्चर्यप्राप्ताः सहसा स्म अद्य
यथा दरिद्रो लभियान वित्तम्।
फलं च प्राप्तं इह बुद्धशासने
प्रथमं विशिष्टं च अनास्रवं च॥ ५०॥
यच्छीलमस्माभि च दीर्घरात्रं
संरक्षितं लोकविदुस्य शासने।
अस्माभि लब्धं फलमद्य तस्य
शीलस्य पूर्वं चरितस्य नाथ॥ ५१॥
यद् ब्रह्मचर्यं परमं विशुद्धं
निषेवितं शासनि नायकस्य।
तस्यो विशिष्टं फलमद्य लब्धं
शान्तं उदारं च अनास्रवं च॥ ५२॥
अद्यो वयं श्रावकभूत नाथ
संश्रावयिष्यामथ चाग्रबोधिम्।
K 119 बोधीय शब्दं च प्रकाशयाम-
स्तेनो वयं श्रावक भीष्मकल्पाः॥ ५३॥
अर्हन्तभूता वयमद्य नाथ
अर्हामहे पूज सदेवकातः।
लोकात्समारातु सब्रह्मकातः
सर्वेष सत्त्वान च अन्तिकातः॥ ५४॥
को नाम शक्तः प्रतिकर्तु तुभ्य-
मुद्युक्तरूपो बहुकल्पकोटयः।
W 112 सुदुष्कराणीदृशका करोषि
सुदुष्करान् यानिह मर्त्यलोके॥ ५५॥

हस्तेहि पादेहि शिरेण चापि
　　प्रतिप्रियं दुष्करकं हि कर्तुम् ।
शिरेण अंसेन च[1] यो धरेत
　　परिपूर्णकल्पान् यथ गङ्गवालिकाः ॥ ५६ ॥
खाद्यं ददेद्भोजनवस्त्रपानं
　　शयनासनं चो विमलोत्तरच्छदम् ।
विहार कारापयि चन्दनामयान्
　　संस्तीर्य चो दूष्ययुगेहि दद्यात् ॥ ५७ ॥
गिलानभैषज्य बहुप्रकारं
　　पूजार्थ दद्यात् सुगतस्य नित्यम् ।
ददेय कल्पान् यथ गङ्गवालिका
　　नैवं कदाचित् प्रतिकर्तु शक्यम् ॥ ५८ ॥
महात्मधर्मा अतुलानुभावा　　N 88
　　महर्द्धिकाः क्षान्तिबले प्रतिष्ठिताः ।
बुद्धा महाराज अनास्रवा जिना
　　सहन्ति बालान इमीदृशानि ॥ ५९ ॥
अनुवर्तमानस्तथ नित्यकालं　　W 113
　　निमित्तचारीण ब्रवीति धर्मम् ।
धर्मेश्वरो ईश्वरु सर्वलोके
　　महेश्वरो लोकविनायकेन्द्रः ॥ ६० ॥
प्रतिपत्ति दर्शेति बहुप्रकारं
　　सत्त्वान स्थानानि प्रजानमानः ।
नानाधिमुक्तिं च विदित्व तेषां
　　हेतूसहस्रेहि ब्रवीति धर्मम् ॥ ६१ ॥
तथागतश्चर्य प्रजानमानः
　　सर्वेष सत्त्वानथ पुद्गलानाम् ।
बहुप्रकारं हि ब्रवीति धर्मं
　　निदर्शयन्तो इममग्रबोधिम् ॥ ६२ ॥

इत्यार्यसद्धर्मपुण्डरीके धर्मपर्याये अधिमुक्तिपरिवर्तो नाम चतुर्थः ॥

---

१ K पयोधरेण for च यो धरेत. २ K °धर्मो अतुलानुभावो महर्द्धिकः क्षान्तिबले प्रतिष्ठितः । बुद्धो महाराज अनास्रवो जिनो.

# ५ ओषधीपरिवर्तः ।

K 121 N 89 W 114 अथ खलु भगवानायुष्मन्तं महाकाश्यपं तांश्चान्यान् स्थविरान् महाश्रावकानामन्त्रयामास—साधु साधु महाकाश्यप । साधु खलु पुनर्युष्माकं काश्यप यद्यूयं तथागतस्य भूतान् गुणवर्णान् भाषध्वे । एते च काश्यप तथागतस्य भूता गुणाः । अतश्चान्येऽप्रमेया असंख्येयाः, येषां न सुकरः पर्यन्तोऽधिगन्तुमपरिमितानपि कल्पान् भाषमाणैः । धर्मस्वामी काश्यप तथागतः, सर्वधर्माणां राजा प्रभुर्वशी । यं च काश्यप तथागतो धर्मं यत्रोपनिक्षिपति, स तथैव भवति । सर्वधर्मांश्च काश्यप तथागतो युक्त्योपनिक्षिपति[1] । तथागतज्ञानेनोपनिक्षिपति[2] । यथा ते धर्माः सर्वज्ञभूमिमेव गच्छन्ति । सर्वधर्मार्थगतिं च तथागतो व्यवलोकयति । सर्वधर्मार्थवशिताप्राप्तः सर्वधर्माध्याशयप्राप्तः सर्वधर्मविनिश्चयकौशल्यज्ञानपरमपारमिताप्राप्तः सर्वज्ञज्ञानसंदर्शकः सर्वज्ञज्ञानावतारकः सर्वज्ञज्ञानोपनिक्षेपकः काश्यप तथागतोऽर्हन् सम्यक्संबुद्धः ॥

तद्यथापि नाम काश्यप अस्यां त्रिसाहस्रमहासाहस्रायां लोकधातौ यावन्तस्तृण-
गुल्मौषधिवनस्पतयो नानावर्णा नानाप्रकारा ओषधिग्रामा नानानामधेयाः पृथिव्यां जाताः
K 122 पर्वतगिरिकन्दरेषु वा । मेघश्च महावारिपरिपूर्ण उन्नमेत्, उन्नमित्वा सर्वावतीं त्रिसाहस्रमहा-
साहस्रां लोकधातुं संछादयेत् । संछाद्य च सर्वत्र समकालं वारि प्रमुञ्चेत् । तत्र काश्यप ये
W 115 तृणगुल्मौषधिवनस्पतयोऽस्यां त्रिसाहस्रमहासाहस्रलोकधातौ, तत्र ये तरुणाः कोमलनाल-
शाखापत्रपलाशास्तृणगुल्मौषधिवनस्पतयो द्रुमा महाद्रुमाः, सर्वे ते ततो महामेघप्रमुक्ता-
द्वारिणो यथाबलं यथाविषयमब्धातुं प्रत्यापिबन्ति । ते चैकरसेन वारिणा प्रभूतेन[3] मेघ-
प्रमुक्तेन यथाबीजमन्वयं विवृद्धिं विरूढिं विपुलतामापद्यन्ते, तथा च पुष्पफलानि प्रसवन्ति ।
ते च पृथक् पृथग् नानानामधेयानि प्रतिलभन्ते । एकधरणीप्रतिष्ठिताश्च ते सर्वे ओषधिग्रामा
N 90 बीजग्रामा एकरसतोयाभिष्यन्दिताः । एवमेव काश्यप तथागतोऽर्हन् सम्यक्संबुद्धो लोक
उत्पद्यते । यथा महामेघः उन्नमते, तथा तथागतोऽप्युत्पद्य सर्वावन्तं सदेवमानुषासुरं लोकं
स्वरेणाभिविज्ञापयति । तद्यथापि नाम काश्यप महामेघः सर्वावतीं त्रिसाहस्रमहासाहस्रां
लोकधातुमवच्छादयति, एवमेव काश्यप तथागतोऽर्हन् सम्यक्संबुद्धः सदेवमानुषासुरस्य
K 123 लोकस्य पुरत एवं शब्दमुदीरयति, घोषमनुश्रावयति—तथागतोऽस्मि भवन्तो देवमनुष्याः
अर्हन् सम्यक्संबुद्धः, तीर्णस्तारयामि, मुक्तो मोचयामि, आश्वस्त आश्वासयामि, परि-
निर्वृतः परिनिर्वापयामि । अहमिमं च लोकं परं च लोकं सम्यक् प्रज्ञया यथाभूतं
प्रजानामि सर्वज्ञः सर्वदर्शी । उपसंक्रामन्तु मां भवन्तो देवमनुष्या धर्मश्रवणाय । अहं
मार्गस्याख्याता मार्गदेशिको मार्गवित्[4] मार्गकोविदः । तत्र काश्यप बहूनि प्राणिकोटी-
नयुतशतसहस्राणि तथागतस्य धर्मश्रवणायोपसंक्रामन्ति । अथ तथागतोऽपि तेषां सत्त्वाना-

---

१ K युक्त्योपदिशति उपनिक्षिपति. २ W adds तथोपनिक्षिपति. ३ K W प्रभूतेनैकमेघ°.
४ After मार्गवित्, K W adds मार्गश्रावको.

मिन्द्रियवीर्यपरापरवैमात्रतां ज्ञात्वा तांस्तान् धर्मपर्यायानुपसंहरति, तां तां धर्मकथां कथयति
बह्वीं विचित्रां हर्षणीयां परितोषणीयां प्रामोद्यकरणीयां[1] हितसुखसंवर्तनकरणीयाम्[2] । यया
कथया ते सत्त्वाः दृष्ट एव धर्मे सुखिता भवन्ति, कालं च कृत्वा सुगतीषूपपद्यन्ते, यत्र W 116
प्रभूतांश्च कामान् परिभुञ्जन्ते, धर्मं च शृण्वन्ति । श्रुत्वा च तं धर्मं विगतनीवरणा भवन्ति ।
अनुपूर्वेण च सर्वज्ञधर्मेष्वभियुज्यन्ते यथाबलं यथाविषयं यथास्थानम् ॥

तद्यथापि नाम काश्यप महामेघः सर्वावतीं त्रिसाहस्रमहासाहस्रां लोकधातुं संछाद्य
समं वारि प्रमुञ्चति, सर्वांश्च तृणगुल्मौषधिवनस्पतीन् वारिणा संतर्पयति । यथाबलं यथा- K 124
विषयं यथास्थामं च ते तृणगुल्मौषधिवनस्पतयो वार्यापिबन्ति, स्वकस्वकां च जातिप्रमाणतां
गच्छन्ति । एवमेव काश्यप तथागतोऽर्हन् सम्यक्संबुद्धो यं धर्मं भाषते, सर्वः स
धर्म एकरसो यदुत विमुक्तिरसो विरागरसो निरोधरसः सर्वज्ञज्ञानपर्यवसानः ।
तत्र काश्यप ये ते सत्त्वास्तथागतस्य धर्मं भाषमाणस्य शृण्वन्ति धारयन्ति अभि-
संयुज्यन्ते, न ते आत्मनात्मानं जानन्ति वा वेदयन्ति वा बुध्यन्ति वा । तत्कस्य हेतोः?
तथागत एव काश्यप तान् सत्त्वांस्तथा जानाति, ये च ते, यथा च ते, यादृशाश्च ते । यं
च ते चिन्तयन्ति, यथा च ते चिन्तयन्ति, येन च ते चिन्तयन्ति । यं च ते भावयन्ति,
यथा च ते भावयन्ति, येन च ते भावयन्ति । यं च ते प्राप्नुवन्ति, यथा च ते प्राप्नुवन्ति, N 91
येन च ते प्राप्नुवन्ति । तथागत एव काश्यप तत्र प्रत्यक्षः प्रत्यक्षदर्शी यथा च दर्शी तेषां
सत्त्वानां तासु तासु भूमिषु स्थितानां तृणगुल्मौषधिवनस्पतीनां हीनोत्कृष्टमध्यमानाम् ।
सोऽहं काश्यप एकरसधर्मं विदित्वा यदुत विमुक्तिरसं निर्वृतिरसं निर्वाणपर्यवसानं नित्य- K 125
परिनिर्वृतमेकभूमिकमाकाशगतिकमधिमुक्तिं सत्त्वानामनुरक्षमाणो न सहसैव सर्वज्ञज्ञानं
संप्रकाशयामि । आश्चर्यप्राप्ता अद्भुतप्राप्ता यूयं काश्यप यद्यूयं संधाभाषितं तथागतस्य न
शक्नुथ अवतरितुम् । तत्कस्य हेतोः? दुर्विज्ञेयं काश्यप तथागतानामर्हतां सम्यक्संबुद्धानां
संधाभाषितमिति ॥

अथ खलु भगवांस्तस्यां वेलायामिममेवार्थं भूयस्या मात्रया संदर्शयमान इमा गाथा W 117
अभाषत—

धर्मराजा अहं लोके उत्पन्नो भवमर्दनः ।
धर्मं भाषामि सत्त्वानामधिमुक्तिं विजानिय ॥ १ ॥

धीरबुद्धी महावीरा चिरं रक्षन्ति भाषितम् ।
रहस्यं चापि धारेन्ति न च भाषन्ति प्राणिनाम् ॥ २ ॥

दुर्बोध्यं चापि तज्ज्ञानं सहसा श्रुत्व बालिशाः ।
काङ्क्षां कुर्युः सुदुर्मेधास्ततो भ्रष्टा भ्रमेयु ते ॥ ३ ॥

१ K °करणीं. २ K °करीम्.

यथाविषयु भाषामि यस्य यादृशकं बलम् ।
अन्यमन्येहि अर्थेहि दृष्टिं कुर्वामि उज्जुकाम् ॥ ४ ॥

K 126 यथापि काश्यपा मेघो लोकधातूय उन्नतः ।
सर्वमोनहती चापि छादयन्तो वसुंधराम् ॥ ५ ॥

सो च वारिस्य संपूर्णो विद्युन्माली महाम्बुदः ।
निर्नादयन्त शब्देन हर्षयेत् सर्वदेहिनः ॥ ६ ॥

सूर्यरश्मी निवारित्वा शीतलं कृत्व मण्डलम् ।
हस्तप्राप्तोऽवतिष्ठन्तो वारि मुञ्चेत् समन्ततः ॥ ७ ॥

स चैव मम मुञ्चेत आपस्कन्धमनल्पकम् ।
प्राखरन्तः समन्तेन तर्पयेन्मेदिनीमिमाम् ॥ ८ ॥

इह या कांचि[1] मेदिन्यां जाता ओषधयो भवेत् ।
तृणगुल्मवनस्पत्यो द्रुमा वाथ महाद्रुमाः ॥ ९ ॥

N 92 सस्यानि विविधान्येव यद्वापि हरितं भवेत् ।
पर्वते कन्दरे चैव निकुञ्जेषु च यद्भवेत् ॥ १० ॥

सर्वान् संतर्पयेन्मेघस्तृणगुल्मवनस्पतीन् ।
तृषितां धरणीं तर्पेत् परिषिञ्चति चौषधीः ॥ ११ ॥

K 127
W 118 तच्च एकरसं वारि मेघमुक्तमिहस्थितम् ।
यथाबलं यथाविषयं तृणगुल्मा पिबन्ति तत् ॥ १२ ॥

द्रुमाश्च ये केचि महाद्रुमाश्च
खुद्राक मध्याश्च यथावयाश्च[2] ।
यथाबलं सर्वे पिबन्ति वारि
पिबन्ति वर्धन्ति यथेच्छकामाः ॥ १३ ॥

काण्डेन नालेन त्वचा यथैव
शाखाप्रशाखाय तथैव पत्रैः ।
वर्धन्ति पुष्पेहि फलेहि चैव
मेघाभिवृष्टेन महौषधीयः ॥ १४ ॥

यथाबलं ता विषयश्च यादृशो
यासां च यद् यादृशकं च बीजम् ।
स्वकस्वकं ताः प्रसवं ददन्ति
वारिं च तं एकरसं प्रमुक्तम् ॥ १५ ॥

---

१ W काश्चित्. २ K यथावशाश्च.

सत्त्वायेति । सहनामग्रहणेनैव स सार्थः सर्वभयेभ्यः परिमुक्तो भवेत् । ईदृशः कुलपुत्र अवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य प्रभावः ॥

ये कुलपुत्र रागचरिताः सत्त्वाः, तेऽवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य नमस्कारं कृत्वा विगतरागा भवन्ति । ये द्वेषचरिताः सत्त्वाः, तेऽवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य नमस्कारं कृत्वा विगतद्वेषा भवन्ति । ये मोहचरिताः सत्त्वाः, तेऽवलोकिते-श्वरस्य बोधिसत्त्वस्य महासत्त्वस्य नमस्कारं कृत्वा विगतमोहा भवन्ति । एवं महर्द्धिकः W 364 कुलपुत्र अवलोकितेश्वरो बोधिसत्त्वो महासत्त्वः ॥

यश्च कुलपुत्र अवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य पुत्रकामो मातृग्रामो नमस्कारं करोति, तस्य पुत्रः प्रजायते अभिरूपः प्रासादिको दर्शनीयः। पुत्रलक्षणसमन्वागतो बहुजनप्रियो मनापोऽवरोपितकुशलमूलश्च भवति । यो दारिकामभिनन्दति, तस्य दारिका K 442 प्रजायते अभिरूपा प्रासादिका दर्शनीया परमया शुभवर्णपुष्करतया समन्वागता दारिका-लक्षणसमन्वागता बहुजनप्रिया मनापा अवरोपितकुशलमूला च भवति । ईदृशः कुलपुत्र अवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य प्रभावः ॥

ये च कुलपुत्र अवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य नमस्कारं करिष्यन्ति, नामधेयं च धारयिष्यन्ति, तेषाममोघफलं भवति । यश्च कुलपुत्र अवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य नमस्कारं करिष्यति, नामधेयं च धारयिष्यति, यश्च द्वाषष्टीनां गङ्गानदीवालिकासमानां बुद्धानां भगवतां नमस्कारं कुर्यात्, नामधेयानि च धारयेत्, यश्च तावतामेव बुद्धानां भगवतां तिष्ठतां ध्रियतां यापयतां चीवरपिण्डपातशयनासनग्लान-प्रत्ययभैषज्यपरिष्कारैः पूजां कुर्यात्, तत्किं मन्यसे कुलपुत्र कियन्तं स कुलपुत्रो वा K 443 N 291 कुलदुहिता वा ततोनिदानं पुण्याभिसंस्कारं प्रसवेत्? एवमुक्ते अक्षयमतिर्बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्—बहु भगवन्, बहु सुगत स कुलपुत्रो वा कुलदुहिता वा ततोनिदानं बहुं पुण्याभिसंस्कारं प्रसवेत् । भगवानाह—यश्च कुलपुत्र तावतां बुद्धानां भगवतां सत्कारं कृत्वा पुण्याभिसंस्कारः, यश्च अवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य अन्तश एकमपि नमस्कारं कुर्यात् नामधेयं च धारयेत्, समोऽनधिकोऽनतिरेकः पुण्याभिसंस्कारः उभयतो भवेत् । यश्च तेषां द्वाषष्टीनां गङ्गानदीवालिकासमानां बुद्धानां भगवतां सत्कारं कुर्यात्, नामधेयानि च धारयेत्, यश्च अवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य नमस्कारं कुर्यात् नामधेयं च धारयेत्, एतावुभौ पुण्यस्कन्धौ न सुकरौ क्षपयितुं कल्पकोटीनयुतशतसहस्रै- K 444 W 365 रपि । एवमप्रमेयं कुलपुत्र अवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य नामधारणात् पुण्यम् ॥

अथ खल्वक्षयमतिर्बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्—कथं भगवन् अवलोकितेश्वरो बोधिसत्त्वो महासत्त्वोऽस्यां सहायां लोकधातौ प्रविचरति? कथं सत्त्वानां धर्मं देशयति? कीदृशश्चावलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्योपायकौशल्यविषयः? एवमुक्ते भगवानक्षयमतिं बोधिसत्त्वं महासत्त्वमेतदवोचत्—सन्ति कुलपुत्र लोकधातवः

येष्ववलोकितेश्वरो बोधिसत्त्वो महासत्त्वो बुद्धरूपेण सत्त्वानां धर्मं देशयति । सन्ति लोक-
धातवः, येष्ववलोकितेश्वरो बोधिसत्त्वो महासत्त्वो बोधिसत्त्वरूपेण सत्त्वानां धर्मं देशयति ।
केषांचित् प्रत्येकबुद्धरूपेण अवलोकितेश्वरो बोधिसत्त्वो महासत्त्वः सत्त्वानां धर्मं देशयति ।
केषांचिच्छ्रावकरूपेण अवलोकितेश्वरो बोधिसत्त्वो महासत्त्वः सत्त्वानां धर्मं देशयति ।
केषांचिद् ब्रह्मरूपेणावलोकितेश्वरो बोधिसत्त्वो महासत्त्वः सत्त्वानां धर्मं देशयति ।
केषांचिच्छक्ररूपेणावलोकितेश्वरो बोधिसत्त्वो महासत्त्वः धर्मं देशयति । केषांचिद्
गन्धर्वरूपेणावलोकितेश्वरो बोधिसत्त्वो महासत्त्वः सत्त्वानां धर्मं देशयति । यक्षवैनेयानां
K 445 सत्त्वानां यक्षरूपेण धर्मं देशयति । ईश्वरवैनेयानां सत्त्वानामीश्वररूपेण, महेश्वरवैनेयानां
N 292 सत्त्वानां महेश्वररूपेण धर्मं देशयति । चक्रवर्तिराजवैनेयानां सत्त्वानां चक्रवर्तिराज-
रूपेण धर्मं देशयति । पिशाचवैनेयानां सत्त्वानां पिशाचरूपेण धर्मं देशयति । वैश्रवण-
वैनेयानां सत्त्वानां वैश्रवणरूपेण धर्मं देशयति । सेनापतिवैनेयानां सत्त्वानां सेनापति-
रूपेण धर्मं देशयति । ब्राह्मणवैनेयानां सत्त्वानां ब्राह्मणरूपेण धर्मं देशयति । वज्रपाणि-
वैनेयानां सत्त्वानां वज्रपाणिरूपेण धर्मं देशयति । एवमचिन्त्यगुणसमन्वागतः कुलपुत्र
अवलोकितेश्वरो बोधिसत्त्वो महासत्त्वः । तस्मात्तर्हि कुलपुत्र अवलोकितेश्वरं बोधिसत्त्वं
W 366 महासत्त्वं पूजयध्वम् । एष कुलपुत्र अवलोकितेश्वरो बोधिसत्त्वो महासत्त्वो भीतानां
सत्त्वानामभयं ददाति । अनेन कारणेन अभयंदद इति संज्ञायते इह सहायां लोकधातौ ॥

अथ खल्वक्षयमतिर्बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्—दास्यामो वयं भग-
वन् अवलोकितेश्वराय बोधिसत्त्वाय महासत्त्वाय धर्मप्राभृतं धर्माच्छादम् । भगवानाह—
K 446 यस्येदानीं कुलपुत्र कालं मन्यसे । अथ खल्वक्षयमतिर्बोधिसत्त्वो महासत्त्वः स्वकण्ठादवतार्य
शतसहस्रमूल्यं मुक्ताहारमवलोकितेश्वराय बोधिसत्त्वाय महासत्त्वाय धर्माच्छादमनुप्रयच्छति
स्म—प्रतीच्छ सत्पुरुष इमं धर्माच्छादं ममान्तिकात् । स न प्रतीच्छति स्म । अथ खल्वक्षय-
N 293 मतिर्बोधिसत्त्वो महासत्त्वोऽवलोकितेश्वरं बोधिसत्त्वं महासत्त्वमेतदवोचत्—प्रतिगृहाण त्वं
कुलपुत्र इमं मुक्ताहारमस्माकमनुकम्पामुपादाय । अथ खल्ववलोकितेश्वरो बोधिसत्त्वो
महासत्त्वोऽक्षयमतेर्बोधिसत्त्वस्य महासत्त्वस्यान्तिकात् तं मुक्ताहारं प्रतिगृह्णाति स्म अक्षय-
मतेर्बोधिसत्त्वस्य महासत्त्वस्यानुकम्पामुपादाय, तासां च चतसृणां पर्षदां तेषां च देवनाग-
यक्षगन्धर्वासुरगरुडकिन्नरमहोरगमनुष्यामनुष्याणामनुकम्पामुपादाय । प्रतिगृह्य च द्वौ
प्रत्यंशौ कृतवान् । कृत्वा चैकं प्रत्यंशं भगवते शाक्यमुनये ददाति स्म, द्वितीयं प्रत्यंशं
भगवतः प्रभूतरत्नस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य रत्नस्तूपे समुपनामयायास । ईदृश्या
कुलपुत्र विकुर्वया अवलोकितेश्वरो बोधिसत्त्वो महासत्त्वोऽस्यां सहायां लोकधातावनुविचरति ॥

K 447 अथ खलु भग[1]वांस्तस्यां वेलायामिमा गाथा अभाषत—

चित्रध्वज अक्षयोमती
W 367 एतमर्थं प[2]रिपृच्छि कारणात् ।

---

१ W अक्षयमतिर्बोधिसत्त्वो महासत्त्वः for भगवान्. २ K परिपृच्छ.

केना जिनपुत्र हेतुना
उच्यते हि अवलोकितेश्वरः ॥ १ ॥
अथ स दिशतां[1] विलोकिया N 294
प्रणिधीसागरु अक्षयोमति ।
चित्र[2]ध्वजोऽध्यभाषत
शृणु चर्यामवलोकितेश्वरे ॥ २ ॥
कल्पशत नेककोट्यु[3]चिन्तिया K 448
बहुबुद्धान सहस्रकोटिभिः ।
प्रणिधान यथा विशोधितं[4]
स्तथ शृण्वाहि[5] मम प्रदेशतः ॥ ३ ॥
श्रवणो अथ दर्शनोऽपि च W 368
अनुपूर्वं च तथा अनुस्मृतिः ।
भवतीह अमोघ प्राणिनां
सर्वदुःखभवशोकनाशकः ॥ ४ ॥
सचि अग्निखदाय पातयेद्
घर्तनार्थाय[6] प्रदुष्टमानसः ।
स्मरतो अवलोकितेश्वरं
अभिसिक्तो इव अग्नि शाम्यति ॥ ५ ॥
सचि सागरदुर्गि पातये-
न्नागमकरसुरं[7]भूतआलये ।
स्मरतो अवलोकितेश्वरं
जलराजे न कदाचिसीदति ॥ ६ ॥
सचि मेरुतलातु पातयेद् K 449
घतनार्थाय प्रदुष्टमानसः ।
स्मरतो अवलोकितेश्वरं
सूर्यभूतो वं[8] नभे प्रतिष्ठति ॥ ७ ॥
वज्रामय पर्वतो[9] यदि
घतनार्थाय हि मूर्ध्नि ओषरेत् ।
स्मरतो अवलोकितेश्वरं
रोमकूप न प्रभोन्ति हिंसितुम् ॥ ८ ॥

---

१ K तादृशता for स दिशता. २ K चित्रध्वजमभिभाषते. ३ K om. °कोट्य. ४ K विशोधितः. ५ K शृणुया. ६ K घातनार्थाय. ७ K om. °सुर°. ८ W om. व. ९ पर्वताशनो for पर्वतो यदि.

W 369 सचि शत्रुगणैः परीवृतः
शस्त्र[1]हस्तैर्विहिंसचेतसैः ।
स्मरतो अवलोकितेश्वरं
मैत्रचित्त तद भोन्ति तत्क्षणम् ॥ ९ ॥

सचि आघतने उपस्थितो
वध्य[2]घातनवशंगतो भवेत् ।
स्मरतो अवलोकितेश्वरं
खण्डखण्ड तद शस्त्र गच्छियुः ॥ १० ॥

K 450 सचि दारुमयैरयोमयै-
र्हडिनिगडैरिह बद्धबन्धनैः ।
स्मरतो अवलोकितेश्वरं
क्षिप्रमेव विपटन्ति बन्धना ॥ ११ ॥

N 295 मन्त्रा बल विद्य ओषधी
भूत वेताल शरीर[3]नाशका ।
स्मरतो अवलोकितेश्वरं
तान्[4] गच्छन्ति यतः प्रवर्तिताः ॥ १२ ॥

सचि ओजहरैः परीवृतो
नाग[5]यक्षसुरभूतराक्षसैः ।
स्मरतो अवलोकितेश्वरं
रोमकूप न प्रभोन्ति हिंसितुम् ॥ १३ ॥

सचि व्यालमृगैः परीवृत-
W 370 स्तीक्ष्णदंष्ट्रनखैर्महाभयैः ।
स्मरतो अवलोकितेश्वरं
क्षिप्र गच्छन्ति दिशा अ[6]नन्ततः ॥ १४ ॥

सचि दृष्टिविषैः परीवृतो
ज्वलनार्चिशिखि[7]दुष्टदारुणैः ।
स्मरतो अवलोकितेश्वरं
क्षिप्रमेव ते[8] भोन्ति निर्विषाः ॥ १५ ॥

---

१ K °हस्तेभिः. २ K °घातान. ३ K °नाशनाः. ४ K तेन. ५ K यक्षनागासुर°. ६ K समन्ततः. ७ W °शिखैः. ८ K तद भोन्ति for ते भोन्ति.

गम्भीर सविद्यु निश्चरी K 451
मेघवज्राशनि वारिप्रस्रवाः ।
स्मरतो अवलोकितेश्वरं
क्षिप्रमेव प्रशमन्ति तत्क्षणम् ॥ १६ ॥

बहुदुःखशतैरुपद्रुतान्
सत्त्व दृष्ट्व बहुदुःखपीडितान् ।
शुभज्ञानबलो विलोकिया
तेन त्रातरु[1] जगे सदेवके ॥ १७ ॥

ऋद्धीबलपारमिंगतो
विपुलज्ञान उपायशिक्षितः ।
सर्वत्र दशद्दिशी जगे
सर्वक्षेत्रेषु अशेष दृश्यते ॥ १८ ॥

ये च अक्षणदुर्गती भया
नरकतिर्यग्यमस्य शासने ।
जातीजरव्याधिपीडिता W 371
अनुपूर्वं प्रशमन्ति प्राणिनाम् ॥ १९ ॥

अथ खलु अक्षयमतिर्हृष्टतुष्टमना इमा गाथा अभाषत— K 452

शुभलोचन मैत्रलोचना
प्रज्ञाज्ञानविशिष्टलोचना ।
कृपलोचन शुद्धलोचना
प्रेमणीय सुमुखा सुलोचना ॥ २० ॥

अमलामलनिर्मलप्रभा
वितिमिर ज्ञानदिवाकरप्रभा ।
अपहृता[2]निलज्वलप्रभा
प्रतपन्तो जगती विरोचसे ॥ २१ ॥

कृपसद्गुणमैत्रगर्जिता
शुभगुण मैत्रमना महाघना ।
क्लेशाग्नि शमेसि प्राणिनां
धर्मवर्षं अमृतं प्रवर्षसि ॥ २२ ॥

---

१ K त्रातारु. २ K अपराहतानल॰.

N 296 कलहे च विवादविग्रहे
नरसंग्रामगते[1] महाभये।
स्मरतो अवलोकितेश्वरं
प्रशमेया अरिसंघ पापका ॥ २३ ॥
K 453 मेघस्वर दुन्दुभिस्वरो
जलधरगर्जित ब्रह्मसुस्वरः।
स्वरमण्डलपारमिंगतः
W 372 स्मरणीयो अवलोकितेश्वरः ॥ २४ ॥
स्मरथा स्मरथा म काङ्क्षथा
शुद्धसत्त्वं अवलोकितेश्वरम्।
मरणे व्यसने उपद्रवे
त्राणु भोति शरणं परायणम् ॥ २५ ॥
सर्वगुणस्य पारमिंगतः
सर्वसत्त्वकृपमैत्रलोचनो।
गुणभूत महागुणोदधी
वन्दनीयो अवलोकितेश्वरः ॥ २६ ॥
K 454 योऽसौ अनुकम्पको जगे
बुद्ध भेष्यति अनागतेऽध्वनि।
सर्वदुःखभयशोकनाशकं
प्रणमामी अवलोकितेश्वरम् ॥ २७ ॥
लोकेश्वर राजनायको[2]
भिक्षुधर्माकरु लोकपूजितो।
बहुकल्पशतांश्चरित्व च
प्राप्तु बोधि विरजां अनुत्तराम् ॥ २८ ॥
स्थित दक्षिणवामतस्तथा
वीजयन्त अमिताभनायकम्।
मायोपमता[3] समाधिना
W 373 सर्वक्षेत्रे जिन गत्वं[4] पूजिषु ॥ २९ ॥
K 455 [5]दिशि पश्चिमतः सुखाकरा
लोकधातु विरजा सुखावती।

---

१ K गतो. २ K चरित्वा नायको. ३ K °पम ते. ४ K गन्ध for गत्व.
५ K दिशपश्चिम.

यत्र [1]एष अमितानायकः
संप्रति तिष्ठति सत्त्वसारथिः ॥ ३० ॥
न च इस्त्रिण तत्र संभवो
नापि च मैथुनधर्म सर्वशः ।
उपपादुक ते जिनोरसाः
पद्मगर्भेषु निषण्ण निर्मलाः ॥ ३१ ॥
सो चैव अमिताभनायकः
पद्मगर्भे विरजे मनोरमे ।
सिंहासनि संनिषण्णको
शालराजो [2]वै यथा विराजते ॥ ३२ ॥
सोऽपि तथा लोकनायको N 297
यस्य नास्ति त्रिभवेस्मि सादृशः ।
यन्मे पुण्य [3]स्तौवित्व संचितं
क्षिप्र भोमि यथ त्वं नरोत्तम ॥ ३३ ॥ इति ॥

अथ खलु धरणिंधरो बोधिसत्त्वो महासत्त्व उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा K 456
दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणाम्य भगवन्तमेत- W 374
दवोचत्—न ते भगवन् सत्त्वाः अवरकेण कुशलमूलेन समन्वागता भविष्यन्ति, येऽवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्येमं धर्मपर्यायपरिवर्तं श्रोष्यन्ति अवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य विकुर्वानिर्देशं समन्तमुखपरिवर्तं नाम अवलोकितेश्वरस्य बोधिसत्त्वस्य विकुर्वणप्रातिहार्यम् ॥

अस्मिन् खलु पुनः समन्तमुखपरिवर्ते भगवता निर्दिश्यमाने तस्याः पर्षदश्चतुरशीतीनां प्राणिसहस्राणामसमसमायामनुत्तरायां सम्यक्संबोधौ चित्तान्युत्पन्नान्यभूवन् ॥

इति श्रीसद्धर्मपुण्डरीके धर्मपर्याये समन्तमुखपरिवर्तो नामावलोकितेश्वर-
विकुर्वणनिर्देशश्चतुर्विंशतिमः ॥

—◦◦◦—

१ W हि for एष २ W om. व. ३ W स्तुत्व.

# २५ शुभव्यूहराजपूर्वयोगपरिवर्तः ।

K 457 N 298 W 375 अथ खलु भगवान् सर्वावन्तं बोधिसत्त्वगणमामन्त्रयामास—भूतपूर्वं कुलपुत्र अतीतेऽध्वन्यसंख्येयैः कल्पैरसंख्येयतरैर्यदासीत् । तेन कालेन तेन समयेन जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञो नाम तथागतोऽर्हन् सम्यक्संबुद्धो लोक उदपादि, विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान् प्रियदर्शने कल्पे वैरोचनरश्मिप्रतिमण्डितायां लोकधातौ । तस्य खलु पुनः कुलपुत्रा जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञस्य तथागतस्य प्रवचने शुभव्यूहो नाम राजाभूत् । तस्य खलु पुनः कुलपुत्रा राज्ञः शुभव्यूहस्य विमलदत्ता नाम भार्याभूत् । तस्य खलु पुनः कुलपुत्रा राज्ञः शुभव्यूहस्य द्वौ पुत्रावभूताम्—एको विमलगर्भो नाम, द्वितीयो विमलनेत्रो नाम । तौ च द्वौ दारकावृद्धिमन्तौ चाभूताम्, प्रज्ञावन्तौ च पुण्यवन्तौ च ज्ञानवन्तौ च बोधिसत्त्वचर्यायां च अभियुक्तावभूताम् । N 299 K 458 तद्यथा—दानपारमितायामभियुक्तावभूताम्, शीलपारमितायां क्षान्तिपारमितायां वीर्यपारमितायां ध्यानपारमितायां प्रज्ञापारमितायामुपायकौशल्यपारमितायां मैत्र्यां करुणायां मुदितायामुपेक्षायां यावत् सप्तत्रिंशत्सु बोधिपक्षिकेषु धर्मेषु । सर्वत्र पारंगतावभूताम्, विमलस्य समाधेः पारंगतौ, नक्षत्रराजादित्यस्य समाधेः पारंगतौ, विमलनिर्भासस्य समाधेः पारंगतौ, विमलभासस्य समाधेः पारंगतौ, अलंकारशुभस्य समाधेः पारंगतौ, महातेजोगर्भस्य समाधेः पारंगतावभूताम् । स च भगवांस्तेन कालेन तेन समयेन इमं सद्धर्म- W 376 पुण्डरीकं धर्मपर्यायं देशयामास तेषां सत्त्वानामनुकम्पायै, तस्य च राज्ञः शुभव्यूहस्यानुकम्पायै । अथ खलु कुलपुत्रा विमलगर्भो दारको विमलनेत्रश्च दारको येन स्वमाता जनयित्री, तेनोपसंक्रामताम् । उपसंक्रम्य दशनखमञ्जलिं प्रगृह्य जनयित्रीमेतदवोचताम्—एह्यम्ब गमिष्यावस्तस्य भगवतो जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य सकाशम् तं भगवन्तं जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञं तथागतमर्हन्तं सम्यक्संबुद्धं दर्शनाय वन्दनाय पर्युपासनाय । तत्कस्य हेतोः ? एष[1] ह्यम्ब स भगवान् जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञस्तथा- N 300 K 459 गतोऽर्हन् सम्यक्संबुद्धः सदेवकस्य लोकस्य पुरतः सद्धर्मपुण्डरीकं नाम धर्मपर्यायं विस्तरेण संप्रकाशयति, तं श्रवणाय गमिष्यावः । एवमुक्ते कुलपुत्रा विमलदत्ता राजभार्या विमलगर्भं दारकं विमलनेत्रं च दारकमेतदवोचत्—एष खलु कुलपुत्रौ युवयोः पिता राजा शुभव्यूहो ब्राह्मणेष्वभिप्रसन्नः । तस्मान्न लप्स्यथ तं तथागतं दर्शनायाभिगन्तुम् । अथ खलु कुलपुत्रा विमलगर्भो दारको विमलनेत्रश्च दारको दशनखमञ्जलिं प्रगृह्य तां स्वमातरं जनयित्रीमेतदवोचताम्—मिथ्यादृष्टिकुलेऽस्मिन्नावां जातौ ? आवां पुनर्धर्मराजपुत्राविति । अथ खलु कुलपुत्रा विमलदत्ता राजभार्या तौ द्वौ दारकावेतदवोचत्—साधु साधु कुल-

१ K एषो.

पुत्रौ । युवां तस्य स्वपितू राज्ञः शुभव्यूहस्यानुकम्पायै किंचिदेव प्रातिहार्यं संदर्शयतम् । अप्येव नाम युवयोरन्तिके प्रसादं कुर्यात् । प्रसन्नचित्तश्च अस्माकमनुजानीयात् तस्य भगवतो जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञस्य तथागतस्यार्हतः * * * सम्यक्संबुद्धमभिगन्तुम् ॥

अथ खलु कुलपुत्रा विमलगर्भो दारको विमलनेत्रश्च दारकस्तस्यां वेलायां सप्ततालमात्रं वैहायसमभ्युद्गम्य तस्य पितू राज्ञः शुभव्यूहस्यानुकम्पायै बुद्धानुज्ञातानि यमकानि K 460 W 377 प्रातिहार्याण्यकुरुताम् । तौ तत्रैवान्तरीक्षे गतौ शय्यामकल्पयताम् । तत्रैवान्तरीक्षे चंक्रमतः, तत्रैवान्तरीक्षे रजो व्यधुनीताम्, तत्रैवान्तरीक्षेऽधःकायाद्वारिधारां प्रमुमोचतुः, ऊर्ध्वकायादग्निस्कन्धं प्रज्वालयतः स्म । ऊर्ध्वकायाद्वारिधारां प्रमुमोचतुः, अधःकायादग्निस्कन्धं N 301 प्रज्वालयतः स्म । तौ तस्मिन्नेवाकाशे महान्तौ भूत्वा खुड्डकौ भवतः, खुड्डकौ भूत्वा महान्तौ भवतः । तस्मिन्नेवान्तरीक्षेऽन्तर्धायतः । पृथिव्यामुन्मज्जतः । पृथिव्यामुन्मज्जित्वा आकाश उन्मज्जतः । इयद्भिः खलु पुनः कुलपुत्रा ऋद्धिप्रातिहार्यैस्ताभ्यां द्वाभ्यां दारकाभ्यां स शुभव्यूहो राजा स्वपिता विनीतः । अथ खलु कुलपुत्राः स राजा शुभव्यूहस्तयोर्दारकयोस्तमृद्धिप्रातिहार्यं दृष्ट्वा तस्यां वेलायां तुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातो दशनखमञ्जलिं प्रगृह्य तौ दारकावेतदवोचत्—को युवयोः कुलपुत्रौ शास्ता, कस्य वा युवां शिष्याविति ? अथ खलु कुलपुत्रास्तौ द्वौ दारकौ तं राजानं शुभव्यूहमेतदवोचत्— K 461 एष स महाराज भगवान् जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञस्तथागतोऽर्हन् सम्यक्संबुद्धस्तिष्ठति ध्रियते यापयति रत्नमये बोधिवृक्षमूले धर्मासनोपविष्टः । सदेवकस्य लोकस्य पुरतः सद्धर्मपुण्डरीकं नाम धर्मपर्यायं विस्तरेण संप्रकाशयति । स आवयोर्भगवान् शास्ता । तस्यावां महाराज शिष्यौ । अथ खलु कुलपुत्राः स राजा शुभव्यूहस्तौ दारकावेतदवोचत्—पश्यामो वयं कुलपुत्रौ तं युवयोः शास्तारम् । गमिष्यामो वयं तस्य भगवतः सकाशम् ॥

अथ खलु कुलपुत्रास्तौ द्वौ दारकौ ततोऽन्तरीक्षादवतीर्य येन स्वमाता जनयित्री तेनोपसंक्रामताम् । उपसंक्रम्य दशनखमञ्जलिं प्रगृह्य स्वमातरं जनयित्रीमेतदवोचताम्—एष आवाभ्यामम्ब विनीतः स्वपिता अनुत्तरायां सम्यक्संबोधौ । कृतमावाभ्यां पितुः शास्तृकृत्यम् । तदिदानीमुत्स्रष्टुमर्हसि । आवां तस्य भगवतः सकाशे प्रव्रजिष्याव इति ॥ W 378

अथ खलु कुलपुत्रा विमलगर्भो दारको विमलनेत्रश्च दारकस्तस्यां वेलायां स्वमातरं K 462 जनयित्रीं गाथाभ्यामध्यभाषताम्—

अनुजानीह्यावयोर्[१]म्ब प्रव्रज्यामनगारिकाम् ।
आवां वै प्रव्रजिष्यावो दुर्लभो हि तथागतः ॥ १ ॥

---

१ K एव for अम्ब.

औदुम्बरं यथा[1] पुष्पं सुदुर्लभतरो जिनः ।
उत्सृज्य प्रव्रजिष्यावो[2] दुर्लभा क्षणसंपदा ॥ २ ॥

N 302 विमलदत्ता राजभार्या आह—

उत्सृजामि युवामद्य गच्छथा साधु दारकौ ।
वयं पि प्रव्रजिष्यामो दुर्लभो हि तथागतः ॥ ३ ॥ इति ॥

K 463 अथ खलु कुलपुत्रास्तौ द्वौ दारकाविमे गाथे भाषित्वा तौ मातापितरावेतदवोच-
ताम्—साधु अम्ब तात एत । वयं सर्वे सहिता भूत्वा गमिष्यामस्तस्य भगवतो जलधर-
गर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य सकाशम् ।
उपसंक्रमिष्यामस्तं भगवन्तं दर्शनाय वन्दनाय पर्युपासनाय धर्मश्रवणाय । तत्कस्य
हेतोः ? दुर्लभो ह्यम्ब तात बुद्धोत्पादः, उदुम्बरपुष्पसदृशो महार्णवयुगच्छिद्रकूर्म-
ग्रीवाप्रवेशवत् । दुर्लभप्रादुर्भावा अम्ब बुद्धा भगवन्तः । तस्मात्तर्हि अम्ब तात परम-
पुण्योपस्तब्धा वयमीदृशे प्रवचने उपपन्नाः । तत् साधु अम्ब तात उत्सृजध्वम् । आवां
गमिष्यावः । तस्य भगवतो जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञस्य तथागत-
W 377 स्यार्हतः सम्यक्संबुद्धस्य सकाशे प्रव्रजिष्यावः । दुर्लभं हि अम्ब तात तथागतानां दर्शनम् ।
दुर्लभो ह्यद्य कालः । ईदृशो धर्मराजा । परमदुर्लभेदृशी क्षणसंपत् ॥

तेन खलु पुनः कुलपुत्राः समयेन तस्य राज्ञः शुभव्यूहस्य अन्तःपुराच्चतुरशीति-
रन्तःपुरिकासहस्राणि अस्य सद्धर्मपुण्डरीकस्य धर्मपर्यायस्य भाजनभूतान्यभूवन् ।
K 464 विमलनेत्रश्च दारकोऽस्मिन् धर्मपर्याये चरितावी । विमलगर्भश्च दारको बहुकल्पकोटीनयुत-
शतसहस्राणि सर्वसत्त्वपापजहने समाधौ चरितोऽभूत् किमिति सर्वसत्त्वाः सर्वपापं
जहेयुरिति । सा च तयोर्दारकयोर्माता विमलदत्ता राजभार्या सर्वबुद्धसंगीतिं सर्वबुद्ध-
धर्मगुह्यस्थानानि च संजानीते स्म । अथ खलु कुलपुत्रा राजा शुभव्यूहस्ताभ्यां द्वाभ्यां
दारकाभ्यां तथागतशासने विनीतः, अवतारितश्च, परिपाचितश्च सर्वस्वजनपरिवारः ।
सा च विमलदत्ता राजभार्या सर्वस्वजनपरिवारा तौ च द्वौ दारकौ राज्ञः शुभव्यूहस्य पुत्रौ
द्वाचत्वारिंशद्भिः प्राणिसहस्रैः सार्धं सान्तःपुरौ सामात्यौ सर्वे सहिताः समग्राः येन
भगवान् जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञस्तथागतोऽर्हन् सम्यक्संबुद्धः,
तेनोपसंक्रामन् । उपसंक्रम्य तस्य भगवतः पादौ शिरसाभिवन्द्य तं भगवन्तं त्रिष्कृत्वः
प्रदक्षिणीकृत्य एकान्ते तस्थुः ॥

N 303 अथ खलु कुलपुत्राः स भगवान् जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञ-
स्तथागतोऽर्हन् सम्यक्संबुद्धो राजानं शुभव्यूहं सपरिवारमुपसंक्रान्तं विदित्वा धार्म्या कथया
संदर्शयति समादापयति समुत्तेजयति संप्रहर्षयति । अथ खलु कुलपुत्रा राजा शुभव्यूह-
स्तेन भगवता धार्म्या कथया साधु च सुष्ठु च संदर्शितः समादापितः समुत्तेजितः

---

१ K पुष्पमतो दुर्लभतरो जिनः. २ K प्रव्रजिष्यामो.

संप्रहर्षितस्तस्यां वेलायां तुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातः कनीयसो भ्रातुः पट्टं बद्ध्वा राज्ये प्रतिष्ठाप्य सपुत्रस्वजनपरिवारः, सा च विमलदत्ता राजभार्या सर्वस्त्रीगणपरिवारा, तौ च द्वौ दारकौ सार्धं तैर्द्वाचत्वारिंशद्भिः प्राणिसहस्रैः, सर्वे सहिताः समग्रास्तस्य भगवतो जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य प्रवचने श्रद्धया अगारादनगारिकां प्रव्रजिताः। प्रव्रजित्वा च राजा शुभव्यूहः सपरिवारश्चतुरशीतिवर्षसहस्राण्यभियुक्तो विजहार इमं सद्धर्मपुण्डरीकं धर्मपर्यायं चिन्तयन् भावयन् पर्यवदापयन्। अथ खलु कुलपुत्राः स राजा शुभव्यूहस्तेषां चतुरशीतीनां वर्षसहस्राणामत्ययेन सर्वगुणालंकारव्यूहं नाम समाधिं प्रतिलभते स्म। सहप्रतिलब्धाच्चास्य समाधेः, अथ तावदेव सप्ततालमात्रं वैहायसमभ्युद्गच्छति स्म॥

अथ खलु कुलपुत्राः स राजा शुभव्यूहो गगनतले स्थितस्तं भगवन्तं जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञं तथागतमर्हन्तं सम्यक्संबुद्धमेतदवोचत्—इमौ भगवन् मम पुत्रौ शास्तारौ भवतः। यदहमाभ्यामृद्धिप्रातिहार्येण तस्मान्महतो दृष्टिगताद्विनिवर्तितः, N 304
तथागतशासने च प्रतिष्ठापितः, परिपाचितश्च अवतारितश्च, तथागतदर्शनाय च संचोदितः। K 466
कल्याणमित्रौ भगवन् मम तौ द्वौ दारकौ पुत्ररूपेण मम गृह उपपन्नौ, यदुत पूर्वकुशलमूलस्मरणार्थम्॥

एवमुक्ते भगवान् जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञस्तथागतोऽर्हन् सम्यक्संबुद्धस्तं राजानं शुभव्यूहमेतदवोचत्—एवमेतन्महाराज, एवमेतद् यथा वदसि। अवरोपितकुशलमूर्लानां[1] हि महाराज कुलपुत्राणां कुलदुहितॄणां च सर्वेषु भवगतिच्युत्युपपत्त्यायतनेषूपपन्नानां सुलभानि भवन्ति कल्याणमित्राणि, यानि शास्तृकृत्येन प्रत्युपस्थितानि भवन्ति, यान्यनुत्तरायां सम्यक्संबोधौ शासकान्यवतारकाणि परिपाचकानि भवन्ति। उदारमेतन्महाराज स्थानं यदुत कल्याणमित्रपरिग्रहस्तथागतदर्शनसमादापकः। पश्यसि त्वं महाराज एतौ द्वौ दारकौ? आह—पश्यामि भगवन्, पश्यामि सुगत। भगवानाह—
एतौ खलु पुनर्महाराज कुलपुत्रौ पञ्चषष्टीनां गङ्गानदीवालिकासमानां तथागतानामर्हतां W 381
सम्यक्संबुद्धानामन्तिके पूजां करिष्यतः, इमं च सद्धर्मपुण्डरीकं धर्मपर्यायं धारयिष्यतः सत्त्वानामनुकम्पायै, मिथ्यादृष्टीनां च सत्त्वानां सम्यग्दृष्टये वीर्यसंजननार्थम्॥

अथ खलु कुलपुत्राः स राजा शुभव्यूहस्ततो गगनतलादवतीर्य दशनखमञ्जलिं K 467
प्रगृह्य तं भगवन्तं जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञं तथागतमर्हन्तं सम्यक्संबुद्धमेतदवोचत्—तत्साधु भगॅवन्[2]। निर्दिशतु तथागतः—कीदृशेन ज्ञानेन समन्वा- N 305
गतस्तथागतोऽर्हन् सम्यक्संबुद्धो येन मूर्ध्नि उष्णीषो विभाति, विमलनेत्रश्च भगवान्, भ्रुवोर्मध्ये चोर्णा विभाति शशिशङ्खपाण्डराभा, सा च समसहिता दन्तावली वदनान्तरे विराजति, बिम्बोष्ठश्च भगवांश्चारुनेत्रश्च सुगतः॥

---

१ K °मूलानि. २ W भगवान्.

अथ खलु कुलपुत्राः स राजा शुभव्यूह इयद्भिर्गुणैस्तं भगवन्तं जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञं तथागतमर्हन्तं सम्यक्संबुद्धमभिष्टुत्य अन्यैश्च गुणकोटीनयुतशतसहस्रैस्तं भगवन्तमभिष्टुत्य तस्यां वेलायां तं भगवन्तं जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञं तथागतमर्हन्तं सम्यक्संबुद्धमेतदवोचत्—आश्चर्यं भगवन्[1] यावन्महार्थमिदं[2] तथागतशासनम्, अचिन्त्यगुणसमन्वागतश्च तथागतप्रवेदितो धर्मविनयः, यावत् सुप्रज्ञप्ता च तथागतशिक्षा । अद्याग्रेण वयं भगवन्न भूयश्चित्तस्य वशगा भविष्यामः, न भूयो W 382 K 468 मिथ्यादृष्टेर्वशगा भविष्यामः, न भूयः क्रोधस्य वशगा भविष्यामः, न भूयः पापकानां चित्तोत्पादानां वशगा भविष्यामः । एभिरहं भगवन् इयद्भिरकुशलैर्धर्मैः समन्वागतो नेच्छामि भगवतोऽन्तिकमुपसंक्रमितुम् । स तस्य भगवतो जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य पादौ शिरसाभिवन्द्य अन्तरीक्षगत एवास्थात् ॥

अथ खलु स राजा शुभव्यूहः सा च विमलदत्ता राजभार्या शतसहस्रमूल्यं मुक्ताहारं भगवत उपर्यन्तरीक्षेऽक्षैप्सीत् । समनन्तरक्षिप्तश्च स मुक्ताहारस्तस्य भगवतो मूर्ध्नि मुक्ताहारः कूटागारः संस्थितोऽभूच्चतुरस्रश्चतुःस्थूणः समभागः सुविभक्तो दर्शनीयः । तस्मिंश्च कूटागारे पर्यङ्कः प्रादुर्भूतोऽनेकदूष्यशतसहस्रसंस्तृतः । तस्मिंश्च पर्यङ्के तथागतविग्रहः पर्यङ्कबद्धः संदृश्यते स्म । अथ खलु राज्ञः शुभव्यूहस्यैतदभवत्—महानुभावमिदं N 306 K 469 बुद्धज्ञानम्, अचिन्त्यगुणसमन्वागतश्च तथागतः । यत्र हि नाम अयं तथागतविग्रहः कूटागारमध्यगतः संदृश्यते प्रासादिको दर्शनीयः परमशुभवर्णपुष्करतया समन्वागतः ॥

अथ खलु भगवान् जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञस्तथागतश्चतस्रः पर्षदः आमन्त्रयते स्म—पश्यथ भिक्षवो यूयं शुभव्यूहं राजानं गगनतलस्थं सिंहनादं नदन्तम्? आहुः—पश्यामो भगवन् । भगवानाह—एष खलु भिक्षवः शुभव्यूहो राजा मम शासने भिक्षुभावं कृत्वा शालेन्द्रराजो नाम तथागतोऽर्हन् सम्यक्संबुद्धो लोके भविष्यति, विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान् विस्तीर्णवत्यां लोकधातौ । अभ्युद्गतराजो नाम स कल्पो भविष्यति । तस्य खलु पुनर्भिक्षवः शालेन्द्रराजस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य अप्रमेयो बोधिसत्त्वसंघो भविष्यति, अप्रमेयः श्रावकसंघः । समा पाणितलजाता च वैडूर्यमयी सा विस्तीर्णवती लोकधातुर्भविष्यति । एवमचिन्त्यः स तथागतोऽर्हन् सम्यक्संबुद्धो भविष्यति । स्यात् खलु पुनः कुलपुत्राः युष्माकं काङ्क्षा वा विमतिर्वा विचिकित्सा W 383 K 470 वा—अन्यः स तेन कालेन तेन समयेन शुभव्यूहो नाम राजाभूत्? न खलु पुनः कुलपुत्रा युष्माभिरेवं द्रष्टव्यम् । तत्कस्य हेतोः? अयमेव स पद्मश्रीर्बोधिसत्त्वो महासत्त्वस्तेन कालेन तेन समयेन शुभव्यूहो नाम राजाभूत् । स्यात्खलु पुनः कुलपुत्रा युष्माकं काङ्क्षा वा विमतिर्वा विचिकित्सा वा—अन्या सा तेन कालेन तेन समयेन विमलदत्ता नाम

---

१ K भगवान्. २ K महार्धम्.

राजभार्याभूत्? न खलु पुनः कुलपुत्रा युष्माभिरेवं द्रष्टव्यम्। तत्कस्य हेतोः? अयं स वैरोचनरश्मिप्रतिमण्डितध्वजराजो नाम बोधिसत्त्वो महासत्त्वस्तेन कालेन तेन समयेन विमलदत्ता नाम राजभार्याभूत्। तस्य राज्ञः शुभव्यूहस्यानुकम्पायै तेषां च सत्त्वानां राज्ञः शुभव्यूहस्य भार्यात्वमभ्युपगतोऽभूत्। स्यात्खलु पुनः कुलपुत्रा युष्माकं काङ्क्षा वा विमतिर्वा विचिकित्सा वा—अन्यौ तौ तेन कालेन तेन समयेन द्वौ दारकावभूताम्? न खलु पुनः कुलपुत्रा युष्माभिरेवं द्रष्टव्यम्। तत्कस्य हेतोः? इमौ तौ भैषज्यराजश्च भैषज्यसमुद्गतश्च तेन कालेन तेन समयेन तस्य राज्ञः शुभव्यूहस्य पुत्रावभूताम्। एवमचिन्त्यगुणसमन्वागतौ कुलपुत्रा भैषज्यराजो भैषज्यसमुद्गतश्च बोधिसत्त्वौ महासत्त्वौ, बहुबुद्धकोटीनयुतशतसहस्रावरोपितकुशलमूलौ एतावुभावपि सत्पुरुषावचिन्त्यधर्मसमन्वागतौ। ये च एतयोः सत्पुरुषयोर्नामधेयं धारयिष्यन्ति, ते सर्वे नमस्करणीया भविष्यन्ति सदेवकेन लोकेन॥ N 307 K 471

अस्मिन् खलु पुनः पूर्वयोगपरिवर्ते भाष्यमाणे चतुरशीतीनां प्राणिसहस्राणां विरजो विगतमलं धर्मेषु धर्मचक्षुर्विशुद्धम्॥

इति श्रीसद्धर्मपुण्डरीके धर्मपर्याये शुभव्यूहराजपूर्वयोगपरिवर्तो नाम पञ्चविंशतिमः॥



# २६ समन्तभद्रोत्साहनपरिवर्तः ।

K 472 N 308 W 384 अथ खलु समन्तभद्रो बोधिसत्त्वो महासत्त्वः पूर्वस्यां दिशि गणनासमतिक्रान्तै-
र्बोधिसत्त्वैर्महासत्त्वैः सार्धं परिवृतः पुरस्कृतः प्रकम्पद्भिः क्षेत्रैः प्रवर्षद्भिः पद्मैः प्रवाद्यमानै-
स्तूर्यकोटीनयुतशतसहस्रैः, महता बोधिसत्त्वानुभावेन महत्या बोधिसत्त्वविकुर्वया महत्या
बोधिसत्त्वर्द्ध्या महता बोधिसत्त्वमाहात्म्येन महता बोधिसत्त्वसमाहितेन महता बोधि-
सत्त्वतेजसा जाज्वल्यमानेन, महता बोधिसत्त्वयानेन, महता बोधिसत्त्वप्रातिहार्येण,
महद्भिर्देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगमनुष्यामनुष्यैः परिवृतः पुरस्कृतः एवमचिन्त्यै-
र्ऋद्धिप्रातिहार्यैः समन्तभद्रो बोधिसत्त्वो महासत्त्व इमां लोकधातुं संप्राप्तः । स येन
गृध्रकूटः पर्वतराजः, येन च भगवांस्तेनोपसंक्रामत् । उपसंक्रम्य भगवतः पादौ शिरसाभि-
K 473 वन्द्य सप्तकृत्वः प्रदक्षिणीकृत्य भगवन्तमेतदवोचत्—अहं भगवंस्तस्य भगवतो रत्नतेजो-
भ्युद्गतराजस्य तथागतस्य बुद्धक्षेत्रादिहागतः इह भगवन् सहायां लोकधातावयं सद्धर्म-
पुण्डरीको धर्मपर्यायो देश्यत इति । तमहं श्रवणायागतो भगवतः शाक्यमुनेस्तथागतस्य
सकाशम् । अमूनि च भगवन्नेतावन्ति बोधिसत्त्वशतसहस्राणि इमं सद्धर्मपुण्डरीकं
धर्मपर्यायं श्रवणायागतानि । तत्साधु भगवान् देशयतु तथागतोऽर्हन् सम्यक्संबुद्ध इमं
सद्धर्मपुण्डरीकं धर्मपर्यायमेषां बोधिसत्त्वानां महासत्त्वानां विस्तरेण । एवमुक्ते भगवान्
W 385 समन्तभद्रं बोधिसत्त्वं महासत्त्वमेतदवोचत्—उद्घटितज्ञा हि कुलपुत्र एते बोधिसत्त्वा महा-
सत्त्वाः । अपि त्वयं सद्धर्मपुण्डरीको धर्मपर्यायो यदुत असंभिन्नतथता । ते बोधिसत्त्वा आहुः—
एवमेतद् भगवन्, एवमेतत्सुगत । अथ खलु यास्तस्यां पर्षदि भिक्षुभिक्षुण्युपासकोपासिकाश्च
संनिपतिताः, तासां सद्धर्मपुण्डरीके धर्मपर्याये प्रतिष्ठापनार्थं पुनरपि भगवान् समन्तभद्रं बोधि-
सत्त्वं महासत्त्वमेतदवोचत्—चतुर्भिः कुलपुत्र धर्मैः समन्वागतस्य मातृग्रामस्य अयं सद्धर्मपुण्ड-
रीको धर्मपर्यायो हस्तगतो भविष्यति । कतमैश्चतुर्भिः ? यदुत बुद्धैर्भगवद्भिरधिष्ठितो भवि-
ष्यति, अवरोपितकुशलमूलश्च भविष्यति, निरयराशिव्यवस्थितश्च भविष्यति, सर्वसत्त्वपरि-
N 309 K 474 त्राणार्थमनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादयिष्यति । एभिः कुलपुत्र चतुर्भिर्धर्मैः समन्वा-
गतस्य मातृग्रामस्य अयं सद्धर्मपुण्डरीको धर्मपर्यायो हस्तगतो भविष्यति ॥

अथ खलु समन्तभद्रो बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्—अहं भगवन्
पश्चिमे काले पश्चिमे समये पश्चिमायां पञ्चशत्यां वर्तमानायामेवंरूपाणां सूत्रान्तधारकाणां
W 386 भिक्षूणां रक्षां करिष्यामि, स्वस्त्ययनं करिष्यामि, दण्डपरिहारं करिष्यामि, विषदूषणं
करिष्यामि, यथा न कश्चित्तेषां धर्मभाणकानामवतारप्रेक्षी अवतारगवेषी अवतारं लप्स्यते ।
न मारः पापीयानवतारप्रेक्षी अवतारगवेषी अवतारं लप्स्यते, न मारपुत्रा न मारकायिका
देवपुत्रा न मारकन्या न मारपार्षद्या यावन्न भूयो मारपर्युत्थितो भविष्यति । न देवपुत्रा
न यक्षा न प्रेता न पूतना न कृत्या न वेतालास्तस्य धर्मभाणकस्यावतारप्रेक्षिणोऽवतार-
गवेषिणोऽवतारं लप्स्यन्ते । अहं भगवंस्तस्य धर्मभाणकस्य सततसमितं नित्यकालं रक्षां

करिष्यामि । यदा च स धर्मभाणकोऽस्मिन् धर्मपर्याये चिन्तायोगमनुयुक्तश्चंक्रमाभिरूढो W 386
भविष्यति, तदाहं भगवंस्तस्य धर्मभाणकस्यान्तिके श्वेतषड्दन्तं गजराजमभिरुह्य तस्य धर्म- K 475
भाणकस्य चंक्रमकुटीमुपसंक्रमिष्यामि बोधिसत्त्वगणपरिवृतोऽस्य धर्मपर्यायस्यारक्षायै ।
यदा पुनस्तस्य धर्मभाणकस्य अस्मिन् धर्मपर्याये चिन्तायोगमनुयुक्तस्य सतः इतो
धर्मपर्यायादन्तशः पदव्यञ्जनं परिभ्रष्टं भविष्यति, तदाहं तस्मिन् श्वेतषड्दन्ते गजराजे-
ऽभिरुह्य तस्य धर्मभाणकस्य संमुखमुपदर्शयित्वा इमं धर्मपर्यायमविकलं प्रत्युच्चारयिष्यामि ।
स च धर्मभाणको ममात्मभावं दृष्ट्वा इमं च धर्मपर्यायमविकलं ममान्तिकाच्छ्रुत्वा तुष्ट उदग्र
आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातो भूयस्या मात्रया अस्मिन् धर्मपर्याये वीर्यमारप्स्यते,
मम च सहदर्शनेन समाधिं प्रतिलप्स्यते, धारण्यावर्तां च नाम धारणीं प्रतिलप्स्यते,
कोटीशतसहस्रावर्तां च नाम धारणीं प्रतिलप्स्यते, सर्वरुतकौशल्यावर्तां च नाम धारणीं
प्रतिलप्स्यते ॥

ये च भगवन् पश्चिमे काले पश्चिमे समये पश्चिमायां पञ्चाशत्यां भिक्षवो वा
भिक्षुण्यो वा उपासका वा उपासिका वा एवं सूत्रान्तधारका एवं सूत्रान्तलेखका एवं K 476
सूत्रान्तमार्गका एवं सूत्रान्तवाचका ये पश्चिमे काले पश्चिमे समये पश्चिमायां पञ्चशत्या-
मस्मिन् धर्मपर्याये त्रिसप्ताहमेकविंशतिदिवसानि चंक्रमाभिरूढा अभियुक्ता भविष्यन्ति,
तेषामहं सर्वसत्त्वप्रियदर्शनमात्मभावं संदर्शयिष्यामि । तमेव श्वेतं षड्दन्तं गजराजमभि-
रुह्य बोधिसत्त्वगणपरिवृतः एकविंशतिमे दिवसे तेषां धर्मभाणकानां चंक्रममागमिष्यामि । N 310
आगत्य च तान् धर्मभाणकान् परिसंहर्षयिष्यामि समादापयिष्यामि समुत्तेजयिष्यामि संप्र-
हर्षयिष्यामि । धारणीं चैषां दास्यामि, यथा ते धर्मभाणका न केनचिद्धर्षणीया भविष्यन्ति ।
न चैषां मनुष्या वा अमनुष्या वा अवतारं लप्स्यन्ते, न च नार्योऽपसंहरिष्यन्ति । रक्षां चैषां
करिष्यामि, स्वस्त्ययनं करिष्यामि, दण्डपरिहारं करिष्यामि, विषदूषणं करिष्यामि । तेषां W 387
च वयं भगवन् धर्मभाणकानामिमानि धारणीपदानि दास्यामि । तानि भगवन् धारणी- K 477
पदानि । तद्यथा—

अदण्डे दण्डपति दण्डावर्तनि दण्डकुशले दण्डसुधारि सुधारपति बुद्धपश्यने सर्वधारणि आवर्तनि संवर्तनि संघपरीक्षिते संघनिर्घातनि धर्मपरीक्षिते सर्व[1]सत्त्वरुतकौशल्यानुगते सिंहविक्रीडिते अनुवर्ते वर्तनि वर्तालि स्वाहा ॥

इमानि तानि भगवन् धारणीपदानि यस्य बोधिसत्त्वस्य महासत्त्वस्य श्रोत्रेन्द्रियस्यावभासमागमिष्यन्ति, वेदितव्यमेतत् समन्तभद्रस्य बोधिसत्त्वस्य महासत्त्वस्याधिष्ठानमिति ॥

अयं च भगवन् सद्धर्मपुण्डरीको धर्मपर्यायोऽस्मिन् जम्बुद्वीपे प्रचरमाणो येषां बोधिसत्त्वानां महासत्त्वानां हस्तगतो भविष्यति, तैर्भगवन् धर्मभाणकैरेवं वेदितव्यम्—समन्तभद्रस्य बोधिसत्त्वस्य महासत्त्वस्यानुभावेन यदस्माकमयं धर्मपर्यायो हस्तगतः समन्तभद्रस्य बोधिसत्त्वस्य

१ W om. °सत्त्व°.

महासत्त्वस्य तेजसा। समन्तभद्रस्य बोधिसत्त्वस्य महासत्त्वस्य चर्यायास्ते भगवन् सत्त्वा
K 478 लाभिनो भविष्यन्ति। बहुबुद्धावरोपितकुशलमूलाश्च ते सत्त्वा भविष्यन्ति। तथागतपाणि-
परिमार्जितमूर्धानश्च ते भगवन् सत्त्वा भविष्यति। ये इदं सूत्रं लिखिष्यन्ति धारयिष्यन्ति,
मम तैर्भगवन् प्रियं कृतं भविष्यति। य इदं सूत्रं लिखिष्यन्ति, ये च अस्यार्थमनुभोत्स्यन्ते,
लिखित्वा च ते भगवन्निदं सूत्रमितश्च्युत्वा त्रायस्त्रिंशतां देवानां सभागताय उपपत्स्यन्ते,
W 388 सहोपपन्नानां चैषां चतुरशीतिरप्सरसां सहस्राण्युपसंक्रमिष्यन्ति। भेरीमात्रेण[1] मुकुटेन ते
देवपुत्रास्तासामप्सरसां मध्ये स्थास्यन्ति। ईदृशः कुलपुत्रा इमं धर्मपर्यायं लिखित्वा पुण्य-
N 311 स्कन्धः। कः पुनर्वादो ये एतमुद्देक्ष्यन्ति स्वाध्यायिष्यन्ति चिन्तयिष्यन्ति मनसि करिष्यन्ति।
तस्मात्तर्हि कुलपुत्राः सत्कृत्य अयं सद्धर्मपुण्डरीको धर्मपर्यायो लिखितव्यः, सर्वचेतः
समन्वाहृत्य। यश्च अविक्षिप्तेन मनसिकारेण लिखिष्यति, तस्य बुद्धसहस्रं हस्तमुपनामयि-
ष्यति, मरणकाले चास्य बुद्धसहस्रं संमुखमुपदर्शनं करिष्यति। न च दुर्गतिविनिपातगामी
K 479 भविष्यति। इतश्च्युतश्च तुषितानां देवानां सभागतायोपपत्स्यते, यत्र स मैत्रेयो बोधिसत्त्वो
महासत्त्वस्तिष्ठति, द्वात्रिंशद्वरलक्षणो बोधिसत्त्वगणपरिवृतोऽप्सरःकोटीनयुतशतसहस्रपुरस्कृतो
धर्मं देशयति। तस्मात्तर्हि कुलपुत्राः पण्डितेन कुलपुत्रेण वा कुलदुहित्रा वा अयं सद्धर्म-
पुण्डरीको धर्मपर्यायः सत्कृत्य लिखितव्यः, सत्कृत्योद्देष्टव्यः, सत्कृत्य स्वाध्यायितव्यः, सत्कृत्य
मनसिकर्तव्यः। इमं कुलपुत्रा धर्मपर्यायं लिखित्वा उद्दिश्य स्वाध्यायित्वा भावयित्वा मनसिकृत्वा
एवमप्रमेया गुणा भविष्यन्ति। तस्मात्तर्हि तेन पण्डितेन भगवन् कुलपुत्रेण वा कुलदुहित्रा
वा अयं सद्धर्मपुण्डरीको धर्मपर्यायो धारयितव्यः। एतावन्तस्तेषां गुणानुशंसा भविष्यन्ति।
तस्मात्तर्हि भगवन् अहमपि तावदिमं धर्मपर्यायमधिष्ठास्यामि, यथा भगवन् ममाधिष्ठानेन
अयं धर्मपर्यायोऽस्मिन् जम्बुद्वीपे प्रचरिष्यति ॥

अथ खलु तस्यां वेलायां भगवान् शाक्यमुनिस्तथागतोऽर्हन् सम्यक्संबुद्धः समन्त-
भद्राय बोधिसत्त्वाय महासत्त्वाय साधुकारमदात्—साधु साधु समन्तभद्र, यत्र हि नाम
त्वमेवं बहुजनहिताय बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय
सुखाय प्रतिपन्नः। एवमचिन्त्यधर्मसमन्वागतोऽसि महाकरुणासंगृहीतेनाध्याशयेन, अचिन्त्य-
K 480 W 389 संगृहीतेन चित्तोत्पादेन, यस्त्वं स्वयमेव तेषां धर्मभाणकानामधिष्ठानं करोषि। ये केचित्
कुलपुत्राः समन्तभद्रस्य बोधिसत्त्वस्य महासत्त्वस्य नामधेयं धारयिष्यन्ति, वेदितव्यं तैः
शाक्यमुनिस्तथागतो दृष्ट इति। अयं च सद्धर्मपुण्डरीको धर्मपर्यायस्तस्य भगवतः
शाक्यमुनेरन्तिकाच्छ्रुतः। शाक्यमुनिश्च तथागतस्तैः पूजितः। शाक्यमुनेश्च तथागतस्य
धर्मं देशयतः साधुकारोऽनुप्रदत्तः। अनुमोदितश्चायं धर्मपर्यायो भविष्यति। शाक्यमुनिना
च तथागतेन तेषां मूर्ध्नि पाणिः प्रतिष्ठापितो भविष्यति। भगवांश्च शाक्यमुनिस्तैश्चीवरै-
रवच्छादितो भविष्यति। तथागतशासनपरिग्राहकाश्च ते समन्तभद्र कुलपुत्रा वा कुल-

[1] K तेऽधिमात्रेण.

दुहितरो वा वेदितव्याः। न च तेषां लोकायते रुचिर्भविष्यति, न काव्यप्रसृताः सत्त्वास्तेषामभिरुचिता भविष्यन्ति, न नृत्तका न मल्ला न नर्तका न शौण्डिकौरभ्रिककौकुटिकसौकरिकस्त्रीपोषकाः सत्त्वास्तेषामभिरुचिता भविष्यन्ति। ईदृशांश्च सूत्रान्तान् श्रुत्वा N 312 K 481
लिखित्वा धारयित्वा वाचयित्वा वा न तेषामन्यदभिरुचितं भविष्यति। स्वभावधर्मसमन्वागताश्च ते सत्त्वा वेदितव्याः। प्रत्यात्मिकश्च तेषां योनिशोमनसिकारो भविष्यति। स्वपुण्यबलाधाराश्च ते सत्त्वा भविष्यन्ति, प्रियदर्शनाश्च ते भविष्यन्ति सत्त्वानाम्। एवं सूत्रान्तधारकाश्च ये भिक्षवो भविष्यन्ति, न तेषां रागो व्याबाधिष्यति, न द्वेषो न मोहो नेर्ष्या न मात्सर्यं न म्रक्षो न मानो नाधिमानो न मिथ्यामानः। स्वलाभसंतुष्टाश्च ते समन्तभद्र धर्मभाणका भविष्यन्ति। यः समन्तभद्र पश्चिमे काले पश्चिमे समये पश्चिमायां पञ्चशत्यां वर्तमानायामस्य सद्धर्मपुण्डरीकस्य धर्मपर्यायस्य धारकं भिक्षुं पश्येत्, एवं चित्तमुत्पादयितव्यम्—
गमिष्यत्ययं कुलपुत्रो बोधिमण्डम्, निर्जेष्यत्ययं कुलपुत्रो मारकलिचक्रम्, प्रवर्तयिष्यत्ययं W 390
धर्मचक्रम्, पराहनिष्यत्ययं धर्मदुन्दुभिम्, प्रपूरयिष्यत्ययं धर्मशङ्खम्, प्रवर्षयिष्यत्ययं धर्मवर्षम्, अभिरोक्ष्यत्ययं धर्मसिंहासनम्। य इमं धर्मपर्यायं पश्चिमे काले पश्चिमे समये पश्चिमायां पञ्चशत्यां वर्तमानायां धारयिष्यन्ति, न ते भिक्षवो लुब्धा भविष्यन्ति, न K 483
चीवरगृद्धा न पात्रगृद्धा भविष्यन्ति। ऋजुकाश्च ते धर्मभाणका भविष्यन्ति। त्रिविमोक्षलाभिनश्च ते धर्मभाणका भविष्यन्ति। दृष्टधार्मिकं च[1] तेषां निवर्तिष्यति। य एवं सूत्रान्तधारकाणां धर्मभाणकानां भिक्षूणां मोहं दास्यन्ति, जात्यन्धास्ते सत्त्वा भविष्यन्ति। ये चैवंरूपाणां सूत्रान्तधारकाणां भिक्षूणामवर्णं संश्रावयिष्यन्ति, तेषां दृष्ट एव धर्मे कायश्चित्रो भविष्यति। य एवं सूत्रान्तलेखकानामुच्चग्घनं करिष्यन्ति उल्लपिष्यन्ति, ते खण्डदन्ताश्च भविष्यन्ति, विरलदन्ताश्च भविष्यन्ति, बीभत्सोष्ठाश्च भविष्यन्ति, चिपिटनासाश्च भविष्यन्ति, विपरीतहस्तपादाश्च भविष्यन्ति, विपरीतनेत्राश्च भविष्यन्ति, दुर्गन्धिकायाश्च भविष्यन्ति, गण्डपिटकविचर्चिदद्रुकण्ड्वाकीर्णशरीराश्च भविष्यन्ति। ये ईदृशानां सूत्रान्तलेखकानां सूत्रान्तवाचकानां च सूत्रान्तधारकाणां च सूत्रान्तदेशकानां च अप्रियां वाचं भूतामभूतां वा संश्रावयिष्यन्ति, तेषामिदमागाढतरं पापकं कर्म वेदितव्यम्। तस्मात्तर्हि समन्तभद्र अस्य धर्मपर्यायस्य धारकाणां भिक्षूणां दूरत एव प्रत्युत्थातव्यम्। यथा तथागतस्यान्तिके गौरवं कर्तव्यम्, तथा तेषामेव सूत्रान्तधारकाणां भिक्षूणामेवं गौरवं कर्तव्यम्॥

अस्मिन् खलु पुनः समन्तभद्रोत्साहनपरिवर्ते निर्दिश्यमाने गङ्गानदीवालिकासमानां N 313
बोधिसत्त्वानां महासत्त्वानां कोटीशतसहस्रावर्ताया धारण्याः प्रतिलम्भोऽभूत्॥

इति श्रीसद्धर्मपुण्डरीके धर्मपर्याये समन्तभद्रोत्साहनपरिवर्तो नाम षड्विंशतिमः॥ W 391

---

1 K च सांपरायिकं तेषां.

## २७ अनुपरीन्दनापरिवर्तः ।[1]

अथ खलु भगवान् शाक्यमुनिस्तथागतोऽर्हन् सम्यक्संबुद्ध उत्थाय तस्माद्धर्मासनात् K 484 N 314 W 392 सर्वांस्तान् बोधिसत्त्वान् पिण्डीकृत्य दक्षिणेन पाणिना ऋद्ध्यभिसंस्कारपरिनिष्पन्नेन दक्षिणहस्तेष्वध्यालम्ब्य तस्यां वेलायामेतदवोचत्–इमामहं कुलपुत्रा असंख्येयकल्पकोटीनयुतशतसहस्रसमुदानीतामनुत्तरां सम्यक्संबोधिं युष्माकं हस्ते परिन्दामि अनुपरिन्दामि निक्षिपामि उपनिक्षिपामि । यथा विपुला वैस्तारिकी भवेत्, तथा युष्माभिः कुलपुत्राः करणीयम् । द्वैतीयकमपि त्रैतीयकमपि भगवान् सर्वावन्तं बोधिसत्त्वगणं दक्षिणेन पाणिनाअध्यालम्ब्यैतदवोचत्–इमामहं कुलपुत्रा असंख्येयकल्पकोटीनयुतशतसहस्रसमुदानीतामनुत्तरां सम्यक्संबोधिं युष्माकं हस्ते परिन्दामि अनुपरिन्दामि निक्षिपामि उपनिक्षिपामि । युष्माभिः कुलपुत्रा उद्ग्रहीतव्या धारयितव्या वाचयितव्या पर्यवाप्तव्या देशयितव्या प्रकाशयितव्या, सर्वसत्त्वानां च संश्रावयितव्या । अमात्सर्योऽहं कुलपुत्रा अपरिगृहीतचित्तो K 485 विशारदो बुद्धज्ञानस्य दाता, तथागतज्ञानस्य स्वयंभूज्ञानस्य दाता । महादानपतिरहं कुलपुत्राः । युष्माभिरपि कुलपुत्रा ममैवानुशिक्षितव्यम् । अमत्सरिभिर्भूत्वेमं तथागतज्ञानदर्शनं महोपायकौशल्यमागतानां कुलपुत्राणां कुलदुहितॄणां च अयं धर्मपर्यायः संश्रावयितव्यः । ये च अश्राद्धाः सत्त्वास्तेऽस्मिन् धर्मपर्याये समादापयितव्याः । एवं युष्माभिः कुलपुत्रास्तथागतानां प्रतिकारः कृतो भविष्यति ॥

W 393 एवमुक्तास्ते बोधिसत्त्वा महासत्त्वा भगवता शाक्यमुनिना तथागतेनार्हता सम्यक्संबुद्धेन महता प्रीतिप्रामोद्येन स्फुटा अभूवन् । महच्च गौरवमुत्पाद्य येन भगवान् शाक्यमुनिस्तथागतोऽर्हन् सम्यक्संबुद्धस्तेनावनतकायाः प्रणतकायाः संनतकायाः शिरांस्यवनाम्य K 486 अञ्जलिं प्रगृह्य सर्वे एकस्वरनिर्घोषेण भगवन्तं शाक्यमुनिं तथागतमर्हन्तं सम्यक्संबुद्धमेतदूचुः–तथा भगवन् करिष्यामो यथा तथागत आज्ञापयति । सर्वेषां च तथागतानामाज्ञां करिष्यामः, परिपूरयिष्यामः । अल्पोत्सुको भगवान् भवतु यथासुखविहारी । द्वैतीयकमपि, त्रैतीयकमपि स सर्वावान् बोधिसत्त्वगण एकस्वरनिर्घोषेण एवं भाषते स्म–अल्पोत्सुको N 315 भगवान् भवतु यथासुखविहारी । तथा भगवन् करिष्यामो यथा तथागत आज्ञापयति । सर्वेषां च तथागतानामाज्ञां परिपूरयिष्यामः ॥

अथ खलु भगवान् शाक्यमुनिस्तथागतोऽर्हन् सम्यक्संबुद्धः सर्वांस्तांस्तथागतानर्हतः सम्यक्संबुद्धानन्येभ्यो लोकधातुभ्यः समागतान् विसर्जयति स्म । यथासुखविहारं च तेषां तथागतानामारोचयति स्म–यथासुखं तथागता विहरन्त्वर्हन्तः सम्यक्संबुद्धा इति । तं च तस्य भगवतः प्रभूतरत्नस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य रत्नस्तूपं यथाभूमौ स्थापयामास । तस्यापि तथागतस्यार्हतः सम्यक्संबुद्धस्य यथासुखविहारमारोचयामास ॥

---

१ Some Mss. and printed editions name this section as धर्मपर्याय.

इदमवोचद् भगवानात्तमनाः । ते चाप्रमेया असंख्येयास्तथागता अर्हन्तः सम्यक्सं- K 487
बुद्धा अन्यलोकधात्वागता रत्नवृक्षमूलेषु सिंहासनोपविष्टाः, प्रभूतरत्नश्च तथागतोऽर्हन् सम्यक्संबुद्धः, स च सर्वावान् बोधिसत्त्वगणः, ते च विशिष्टचारित्रप्रमुखा अप्रमेया असंख्येया बोधिसत्त्वा महासत्त्वा ये पृथिवीविवरेभ्योऽभ्युद्गताः, ते च महाश्रावकाः, ताश्च चतस्रः पर्षदः, सदेवमानुषासुरगन्धर्वश्च लोको भगवतो भाषितमभ्यनन्दन्निति ॥

इति श्रीसद्धर्मपुण्डरीके धर्मपर्यायेऽनुपरीन्दनापरिवर्तो नाम सप्तविंशतिमः समाप्तः ॥ W 394

*　*　*　*　*　*

ये [1]धर्मा हेतुप्रभवा हेतुं तेषां तथागतो ह्यवदत् ।
तेषां च यो निरोध[2] एवं वादी महाश्रमणः ॥



१ W धर्म.　२ W निरोधो.

# प्रथमं परिशिष्टम्।

## श्लोकसूची।

# द्वितीयं परिशिष्टम् ।

## विशेषनामसूची ।

[ अङ्कः पत्राङ्कबोधकः ]

# तृतीयं परिशिष्टम् ।

## शब्दकोषः ।

[ अङ्कः पत्राङ्कबोधकः । ]

**अकिलासी** १३० never wearied

**अक्षण** ६८ unhappy moments or births or states, where spiritual evolution is impossible (such states are eight in number)

**अक्षोभ्य** २३८ a large number of years

**अग्निखदा** २५३ fire-pit

**अग्निस्कन्ध** ५१ column of fire

**अच्छटासंघात** २२९ snap of fingers

**अच्छिद्रपूर्ण** २३ full in such a manner as to leave no crevices

**अजानक** ५ foolish

**अञ्च** ७६ to wander

**अतर्किक** २५ beyond the field of reasoning

**अद्दशि** (=अद्राक्षीत्) ४ saw

**अद्याग्रेण** ७४ from today

**अधिमात्रम्** २४ often, every now and then, with emphasis

**अधिमानप्राप्त** ८ over-bearing

**अधिमुक्ति** ३ strong inclination, earnest application

**अध्यवसित** ५४ attached, addicted

**अध्येष्** २६ to request

**अध्योषित** ३२ attached

**अनवलीन** १४६ not depressed, not downcast

**अनिलम्भ** (समाधि) २४४ independent

**अनाभिभू** ८७ never defeated, always commanding respect, having no superior

**अनिञ्जमान** २ immovable

**अनिर्धावित** ५४ not running out

**अनीर्षुक** १७१ not jealous

**अनुत्पत्तिकी धर्मक्षान्तिः** ९२ intellectual receptivity to the truth that there is no origination of objects or notions

**अनुपधिशेष** (निर्वाण) १३ free from upadhi or skandha, complete, absolute

**अनुपरिग्राहिका** १६९ showing favour or kindness

**अनुपरिन्दा** २४६ hand over, entrust

**अनुसंधि** २३२ logical connection

**अनोपलिप्त** (अनुप°) ९ undefiled

**अनोलीन** १६७ not despondant

**अन्तरकल्प** १३ intermediate period

**अपगतफल्गु** (परिषद्) २६ not worthless, devoid of worthless members

**अप्रणिहित** ७१ a state that is free from desire, longing or purpose, aimless

**अभिच्छादय्** ५० to cover, to endow with

**अभिज्ञान** ६५ a man possessing highest or superior knowledge

**अभिज्ञा** ७ higher or superior knowledge

**अभिनिर्हार** २७ earnest wish, realisation

**अभिमानप्राप्त** २५ disrespectful, proud, conceited

**अभियुज्** १७ to apply oneself to

**अभ्याशीभूत** २०६ nearing, approaching

**अमनआप** २१८ unpleasant

अवकल्पय् १८९ to accept, to believe
अवरोपितकुशलमूल १२ one who has planted the roots of merit
अवरक २५७ small
अविद्वस् (अविद्वान्, बाल) ३० ignorant
अवेधमान १६ not swerving
अवैवर्तिक १ not liable to turn back to saṁsāra, firmly set on the road to enlightenment
अशैक्ष १ one who no longer needs religious training
अष्टापद ४८ having eight limbs or parts
असमसमा २५७ matchless
आकाश ५२ open space
आघातन २५३ slaughter-house
आजानेय १ of noble race
आत्मभाव (= देह) ६ body
आदर्शपृष्ठ २२० surface of mirror
आदीनव ६२ danger
आनिमित्त ७१ a state in which there is no cause or root left
आनुभाव ११५ dignity, power
आनुलोमिकी १८ favourable, suitable
आभिमानिक २६ disrespectful
आयुष्कषाय २९ impure life
आरम्बण ३ basis, support
आरागित ५० propitiated, acquired
आवेणिक (धर्म) २१ individual, peculiar

इष्टा ३५ brick

उच्चग्घन २६७ jeering
उच्छदक २०३ shampooer (?), probably watering place (= उत्स + दक)
उच्छ्रय ९७ body
उजङ्गल १४६ desert
उज्जुका ८६ straightforward
उत्कासनशब्द २३० conspicuous pronouncement
उत्कूलनिकूल २४४ high and low, uneven
उत्स २४० a natural spring
उत्सदा १११ high, elevated, prominent
उदग्र ४० delighted
उदपान १४६ a well
उदारस्थामता ७३ of noble motive
उपनिषद् १८० likeness, comparison
उपनिसा १९९ likeness, comparison
उ(औ)पपादुक २५७ born spontaneously
उपस्थपे ६१ offer
उपायकौशल्य ३ skill in expedients, diplomacy
उल्लोकनक ५८ apperture through which to see out, a window
ऊर्णाकोश ३ circle of hair between the eyebrows of Buddha

ओकिर १९४ to sprinkle
ओपतन्त ५६ falling
ओरस (=औरस) ६० son from one's own body
ओषर् २२३ to clear away
ओहन् ८६ to strike, cover, bind
औद्बिल्य ३ joy, pleasure, excitement
औपम्य ५१ illustration

कङ्कर २३८ a large number of years
कटपलिकुञ्चिका ७३ thatched hut, grass hut
कटलेपन ५१ plaster
कटसी ३२ a place (cemetary) where unburied corpses are left
कथंकथा ४४ doubt
कल्पकषाय २८ degradation of world-age
कषायता २९ impurity

कालिकावात २५० storm
किकारणं ६४ (=किं कारणम्) for what reason
किलान्तकाय २१५ with body fatigued
किलास ६८ weariness, exhaustion
किलासिता ८८ weariness
किलीकृतसंज्ञ १९१ one whose mind is stupified
कुशलमूल १२ roots of merit
कूट ३५ heap
कूटना १७२ trickery
कृतपरिकर्मन् १८१ one who has served or attended
कोच्चक (कोचक) ६१ a woolen rug
कोष्ठक ९५ a room inside a house
कौकृत्य १७१ remorse, wicked deed
कौकुटिक १६६ dealer in cocks and hens
कौसीद्य १४ sloth
क्रोडसक्किन् ६७ moving by thighs or sides

क्लमथ १३ weariness, fatigue
क्लेशकषाय २९ depravity
क्षण ३० birth under favourable condition
क्षुद्रीक ८८ small, insignificant

खुड्डक २५९ small
खुद्दाक २५ small

गणक १०४ astronomer
गाथाभिनिर्हार १९७ expression or praise in verses
गिलानभैषज्य ८ medicine for the sick
गुर्विणिका २१५ pregnant woman
गूथोडिल्ल २४५ cesspool
गूथोलि ९७ excrement ;- गल्ल ९७ cesspool
गोण ५३ bull
गोणिका ५३ jute carpet
गोपानसी ५६ roof-frame

ग्लान्य ७४ exhaustion

घतन (=घातन) २५३ slaughter house

चरक (परिव्राजक) १६६ wandering ascetic
चरि (=चर्या) ७ course of conduct
चर्पटमण्डक ३६ flat of hand
चित्रीकृत १३७ demanded reverence
चेतःपरिवितर्क ३ guessing the way of thought or mind
चैलकभूत १२३ turned into monk
चोल ७७ clothing, garment
चौक्ष ९ clean
च्युतोपपाद (=च्युति+उपपाद) १५ fall from heaven and birth in this world

छम्भितत्त्व ४६ stupifaction, consternation
छिद्रशिक्षा २९ defective training
छोरय् १५४ to leave, to abandon

जलमण्ड(ड्ड)क ३६ a kind of drum
जिनोरस ३५७ son of a Jina i. e., बोधिसत्त्व.
ज्वालूषित ५८ burnt by flames

झल्ल १६६ fighter

तलसक्तिका ३७ clapping of hand in reverence
तायी ३० attaining salvation, holy (an epithet of Buddha)
तुणव ३६ wooden instrument, a flute
त्रातरु २५५ protector
त्रिविमोक्ष २६७ theefold release from शून्यता, आनिमित्त and अप्रणिहित
त्रैधातुक ६ the triple universe, saṁsāra

दहर १८७ young

दिवसमुद्रा ७३ daily wages
दिशता ( दिशा ) १९ direction
दृष्टधार्मिक ५४ of this world, present life
दृष्टिकषाय २९ impure view, heresy
दृष्टिगत २६१ heretical views
दृष्टीकृत ३२ heretic views
द्रव ( = वेग ) १२१ speed

धर्मकोश १७ treasure of religious doctrine
धर्मता २७ rule, normal state
धर्मनियामता ३८ rule, law
धर्मनेत्री ५ body of doctrine, a work embodying doctrine
धर्मपर्याय २ religious discourse
धर्मसंशयप्राप्त २४ in doubt as to true nature of things
धर्मप्राभृत २५२ pious gift
धर्मसांकथ्य ३ religious talk, conversation
धर्माच्छाद २५२ a pious gift
धर्मानुज्ञाताविन् २१ one possessing knowledge of law
धर्मामुख ३७ topic of a teaching

नवयानसंप्रस्थित २२ newly entered upon a religious life
निक्षेप १६४ treasure, trust
निमित्तसंज्ञ ( =उपलम्भदृष्टिक) ४१ holding the view that the world is real
निरामिष १२८ free from worldliness
निरीहक ९ indifferent
निर्जिनाति १७३ acquires
निर्णामय् ५२९ to draw out
निर्मित १४७ created by supernatural powers
निर्यातय् ९ to donate, to hand over
निर्वाह्यमान १४६ coming out, flowing out

निष्कुट ५६ a small room
निष्ठा १४७ conclusion, resolve
निष्पलावा ( पर्षद् ) २६ free from worthless men
निःसरण ५४ exit

पण्डक १६६ eunuch
पराहन् ११६ to strike, to beat
परिगृहीतचित्त २६८ narrow-minded
परिणामयन् ६ ripening, bringing to maturity
परिपाचित १८ trained
परिभाष् ८ abuse
परिषा १७१ assembly
परिष्कार ७३ articles of use
परीत्त १६२ limited, small
परीन्दन, परीन्दामि २३० handing over, passing on
पर्यवनाह ५३ cover
पर्युपासिताविन् २१ in the habit of waiting upon
पर्येष्टि ५४ hankering
पर्षा (=पर्षद्) ४ assembly
पलानक ७७ runaway
पलिकुञ्चिक ७८ grass hut
पश्चिमक १४ last
पारमी (=पारमिता, पार) २४ mastery, supremacy
पोत ५५० boat
पोतक ५७ eggs or young ones
प्रणायक १२६ guide
प्रणिधान २९ ardent desire, earnest wish
प्रणिधान ३२ objective
प्रणिधानवशेन ४८ according to preoccupations of hearers
प्रतिभिन्न १४५ disclosed
प्रतिभू ५४ surety
प्रतिसंलयन १६७ solitary residence
प्रतिसंलीन ११८ retired for meditation
प्रतिसंविद् १२९ special knowledge

प्रत्यवर ७५ lower, inferior
प्रत्यात्मक ७४ personal, individual
प्रत्यात्मिक २८ special, individual
प्रत्येकबुद्धयान ५५ (अन्ये सत्त्वा अनाचार्यकं ज्ञानं दमशमथमाकाङ्क्षमाणा आत्मपरिनिर्वाणहेतोर्हेतुप्रत्ययानुबोधाय तथागतशासनेऽभियुज्यन्ते, ते उच्यन्ते प्रत्येकबुद्धयानमाकाङ्क्षमाणाः) path leading to individual emancipation
प्रदेशतः २४३ in fraction
प्रस्कन्न ३९ sinking
प्राकटा १६७ public woman, open, without clothes, naked, not restrained, vulgar
प्राखर् ८७ to spread, to distribute
प्रातिहार्य ३ extraordinary occurrence, miracle
प्रीतिस्फुट ३१ full of love or devotion
प्लोष्टमुख ५८ with mouth or face burnt

बाहुबलिक ५२ having strength of arms
बोधिपक्षिक २५८ condition sfavourable to enlightenment; (they are 37 in number)
बोधिमण्ड २१ best enlightenment, supreme place

भवसंयोजन १ bondage of saṁsāra
भवाग्र ३ highest point of existence
भूत २३७ real, genuine
भूमिसूचक ६८ iron pikes filling the ground
भेरुण्डक ५६ vulture
भ्रमुकान्तर ४ space between eyebrows

मञ्जूषक २ a kind of heavenly flower
मनःसंगीति ९८ mental concord
मन्यित ४६ thought, fancy, notion
मरु (= मरुत्, देव) ७ god
महानाग १ eminent
महानिमित्त ३ a great sign
महाभिषट्क १०६ ?
महामञ्जूषक २ a kind of heavenly flower
महामान्दारव २ a kind of heavenly flower
महा(बुद्ध)यान ५५ (अपरे पुनः सत्त्वाः सर्वज्ञज्ञानं बुद्धज्ञानं स्वयंभूज्ञानमनाचार्यकं ज्ञानमाकाङ्क्षमाणाः बहुजनहिताय......सर्वसत्त्वपरिनिर्वाणहेतोस्तथागतज्ञानबलवैशारद्यानुबोधाय तथागतशासनेऽभियुज्यन्ते, ते उच्यन्ते महायानमाकाङ्क्षमाणाः)
महावैपुल्य २ great with reference to extent
मातृग्राम २४२ women as a class
मान्दारव २ a kind of heavenly flower
मिद्ध ८ drowsiness, sloth
मोह २६७ false knowledge
मौष्टिक १६६ boxer, prize-fighter

यमकप्रातिहार्य २५९ twin miracles
योनिशोमनसिकार २६७ fundamental mental comprehension

रिञ्चित ४५ deprived, taken away

लीयना १४७ depression
लुञ्जक ६७ lame
लेन ५७ house or room
लोकान्तरिका १०८ interstices between the worlds, purgatories
लोकायत २६७ a popular philosophy
लोकायत (लोकायतिक) १६६ a school of popular philosophy

वङ्क (वक्र) ३३ crooked
वशीभूत ५१ disciples
वार्षिकतैल २४२ oil scented with the flower called jasmine
विकुर्वा २५२ miracle

विकुर्वानिर्देश २५७ mention of miracles
विक्षेपचित्त ८ distraction of mind
विचिकित्सा २४ doubt
विनाभाविक ५४ due to separation or loss
विनाशधर्मा २१६ a lady who would deliver a still-born child
विपद् २५४ to fall, to shatter to pieces
विभूषिता ७८ wealth
विवर (बिम्बर) २३८ a large number of years
विश्राम ९५ a halt, restiug place
विहेठक ४६ cheater, rogue
वृषभ(भि)ता १२८ greatness
वेष्टि ७७ forced labour
वैमात्रता ८५ difference, heterogeneous
वैशारद्य २१ confidence in one's greatness
वैश्वासिक १७ trustworthy
वैष्टिक ७२ a worker on forced labour
वैस्तारिक १८ spreading in different directions
व्यक्त ११७ clever, wise
व्यतिवृत्त १८३ destitute of, devoid of
व्याकरण ५० explanation of the future of a devotee
व्याकृत ५० explained (the future of)
व्याहार २२ expression
व्योमक २३६ a kind of gold ornment
व्राणिक ६६ a peson having wounds

शतापदी ५७ centiped
शास्तृकृत्य २५९ duties of a teacher
शून्यता ७१ void
शैक्ष १ one who needs religious training

शौटीर्यवान् १६७ brave
श्रद्धासार २६ possessing essence of faith
श्रावकयान ५५ (तत्र केचित् सत्त्वाः परघोषश्रवानुगमनमाकाङ्क्षमाणा आत्मपरिनिर्वाणहेतोश्चतुरार्यसत्यानुबोधाय तथागतशासनेऽभियुज्यन्ते, ते उच्यन्ते श्रावकयानमाकाङ्क्षमाणाः) a path securing individual emancipation by ordinary faith

सकृतस्थित २१५ seated at one place
सचि (=सचेत्) २५३ if
सततसमित ७२ constantly vigilant
सत्त्वकषाय २९ impurity of beings
सद्धर्मप्रतिरूपक ४८ imitation of true law
समन्वाहर् २३९ to behold, to recollect
समसंगीति ११० singing jointly or in corus
समादप् ८ to take upon oneself
समुच्छ्रय २९ physical body
समुदानिय ९७ having acquired
सर्वावत् ३ entire, full
संकारधान ७३ dirty place, dunghill
संधाभाष्य २१ esoteric meaning, real sense; meaning in a riddlesome manner
संधाभाषित ८५ real sense, esoteric sense
संधावचन ४३ esoteric expression
संप्रजानन् २१ mindful, concious, thoughtfnl
सं+भिद ७५ disclose
संमन्त्रित ४७ secret doctrine
संलेखवृत्ति १६४ practising fasts
संश्रावितक १२५ disciple, hearer
साती(दी)यू १६७ to show attachments to

सामुत्कर्षिकी ४४ highest
सारूप्य १०९ appropriate
सांपरायिक ५४ belonging to next world
सुखुमा (=सूक्ष्मा) २३ subtle
सुपरिस्फुट ३ filled completly
सौकरिक १६६ dealer in pigs
स्थापयित्वा ५४ without the use of, except
स्फीत ६ vast, extensive
स्यन्दनिका ९७ drain of dirt
स्वप्रत्यय ( धर्म ) २१ objects which are known by intuition

हडिनिगड २५० fetters
हीनाभिरत ३० attached to low objectives
हेष्ठे ३९ below, under

——:o:——

## बौद्धसंस्कृतग्रन्थमालायां प्रकाश्यत्वेन संकल्पिता ग्रन्थाः ।

### १ नव धर्माः

१ ललितविस्तरः ( प्रकाशितम् ) Rs. 10.00 and 12.50

२ समाधिराजसूत्रम् ( यन्त्रस्थम् )

३ लङ्कावतारसूत्रम्

४ अष्टसाहस्रिका ( प्रज्ञापारमिता ) आलोकव्याख्यासहिता ( प्रकाशिता ) Rs. 20.00 and Rs. 25.00

५ गण्डव्यूहसूत्रम्

६ सद्धर्मपुण्डरीकसूत्रम् ( प्रकाशितम् ) Rs. 10.00 and 12.50

७ दशभूमिकसूत्रम्

८ सुवर्णप्रभाससूत्रम्

९ तथागतगुह्यकम्

### २ माध्यमिकमते–

१० मध्यमकशास्त्रं नागार्जुनीयम्, आचार्यचन्द्रकीर्तिविरचितया प्रसन्नपदाख्य-व्याख्यया संवलितम् ( प्रकाशितम् ) Rs. 10.00 and 12.50

११ शिक्षासमुच्चयः शान्तिदेवविरचितः ( प्रकाशितः ) Rs. 10.00 and 12.50

१२ बोधिचर्यावतारः शान्तिदेवविरचितः प्रज्ञाकरमतिविरचितया पञ्जिकाख्य-व्याख्यया संवलितः ( प्रकाशितः ) Rs. 10.00 and 12.50

### ३ योगाचारमते–

१३ सूत्रालंकारः आचार्यासङ्गविरचितः

### ४ विनयाः

१४-१५ महावस्तु—लोकोत्तरवादिनां विनयः

१६ मूलसर्वास्तिवादिनां विनयः ( Gilgit Mss. )

### ५ महायानसूत्रसंग्रहः

१७ प्रथमः खण्डः—प्रज्ञापारमितासंक्षेपः, सुखावतीव्यूहः, कारण्डव्यूहः, राष्ट्रपाल-परिपृच्छा, अर्थविनिश्चयसूत्रं च

१८ द्वितीयः खण्डः—शालिस्तम्बसूत्रम्, प्रतीत्यसमुत्पादसूत्रम्, भैषज्यगुरुवैदूर्य-प्रभसूत्रम्, अन्येषां च सूत्राणां संग्रहः

